தஞ்சாவூர் சரசுவதி மகால் வெளியீட்டு எண் 386

श्रीः

॥ श्रीगणेशाय नमः ॥

# ॥ वैद्यनाथस्थलमाहात्म्यम् ॥

## வைத்யநாத ஸ்தல மாஹாத்மியம்

(வைதீஸ்வரன்கோயில் தலபுராணம்)




தஞ்சாவூர் மகாராஜா சரபோஜியின்

சரசுவதி மகால் நூலகம்

தஞ்சாவூர்.

1998 விலை ரூ. 30-00

தஞ்சாவூர் சரசுவதி மகால் வெளியீட்டு எண் 386

श्रीः

॥ श्रीगणेशाय नमः ॥

# ॥ वैद्यनाथस्थलमाहात्म्यम् ॥

# வைத்யநாத ஸ்தல மாஹாத்மியம்

பதிப்பாசிரியர் :

ஸாஹித்ய சிரோமணி

திருமதி. எஸ். இராஜலக்ஷ்மி,

ஸம்ஸ்கிருத பண்டிதர்,

சரசுவதி மகால் நூலகம், தஞ்சாவூர்.







தஞ்சாவூர் மகாராஜா சரபோஜியின்

சரசுவதி மகால் நூலகம்

தஞ்சாவூர்.

1998 விலை ரூ. 30-00

॥ श्रीः ॥

॥ श्रीगणेशाय नमः ॥

# ॥ वैद्यनाथस्थलमाहात्म्यम् ॥



श्रीगणेशाय नमः ॥

वन्दे जटायुनगरीं वन्दे सिद्धामृतं सरः ।
वन्दे कल्पकविघ्नेशं वन्दे शङ्खवनोद्भवम् ॥ १

वन्दे श्रीवैद्यनाथेशं भवरोगचिकित्सकम् ।
वन्दे श्रीगन्धकण्ठीं तां वन्दे बालाम्बिकामुमाम् ॥ २

नैमिशीया महात्मानो मुनयो ब्रह्मवादिनः ।
पप्रच्छुर्विनतास्सर्वे सूतं पौराणिकोत्तमम् ॥ ३

सूतः —

शृणुध्वमृषयस्सर्वे सावधानेन चेतसा ।
श्रीविदाने चन्द्राख्ये मलये पर्वतोत्तमे ॥ ४

कल्पद्रुमसमाकारनानावृक्षोपशोभिते ।
नानापुष्पलतारम्ये नानोद्यानविराजिते ॥ ५

चम्पकैः सुरपुन्नागैः पनसैः पाटलैरपि ।
हिंतालैरर्जुनैर्नीपैर्वकुलैर्वंजुलैर्धवैः ॥ ६

नारिकेलमुखै रम्यैः भूरुहैरभिवेष्टिते ।
मल्लिकामालतीजातीकरवीरमुखैस्तथा ॥ ७

नानाविधाभिरभितो लताभिरुपशोभिते ।
सिंहशार्दूलकुंभीन्द्रमहिषप्रमुखैर्मृगैः ॥ ८

कोकिलैः शिखिराजैश्च शुकैश्चैव तथा परैः ।
परस्परविरोधैश्च मृगैः पक्षिगणैरपि ॥ ९

सर्वदा भासमाने च शिखरीन्द्रमणिद्युतौ ।
नानारत्नसमाकीर्णे नानामृगातिशोभिते ॥ १०

तप्तजांबूनदा भास कुट्टिमोपरिमण्डिते ।
कुलपर्वतराजेन्द्र विभवे च हिमालये ॥ ११

तस्मिन्गिरिवरे रम्ये किंचिदत्यद्भुतं सरः ।
हंसकारण्डवाकीर्णं चक्रवाकोपशोभितम् ॥ १२

पद्मेन्दीवरकल्हारवृंदैश्च कुमुदैरपि ।
मण्डितं यादसां वृन्दैर्भासमानैर्जलान्तरम् ॥ १३

शैवालपंक्तिसंलग्नजलमानुष शोभितम् ।
वरटाभिर्लक्ष्मणाभिः संस्थितं पतिभिस्सह ॥ १४

एवमन्यैर्जलचरैः जीववृन्दैर्विराजितम् ।
सरसस्तस्य तीरे तु किंचिदस्ति तपोवनम् ॥ १५

धर्माश्रममिति ख्यातं नाम्ना चार्थेन संमतम् ।
वल्कलैः पर्णशालाभिः बृसीगण समाततैः ॥ १६

होमधूमैः भूमिगन्धपरिव्याप्तांबरैस्तथा ।
मंदाकिनीतटस्थानां मयूराणां मदोत्करैः ॥ १७

दशदिक्सुन्दरीणां च कचामोदकरं पुनः ।
तस्मिन् तपोवने रम्ये तपःसिद्धिकरेनृणाम् ॥ १८

शौनकाद्या महात्मानः सर्ववेदार्थवित्तमाः ।
शौनकः काश्यपः कण्वो विश्वामित्रः पराशरः॥ १९

मार्कण्डेयः पुलस्त्यत्रिः अङ्गिरा भार्गवः कविः ।
शाण्डिल्यश्चापि माण्डव्यः कपिलो नारदो भृगुः ॥ २०

पर्वतश्शरभङ्गश्च बुधो बोधायनो वसुः ।
वसिष्ठो वामदेवश्च जाबलि गौतमः शुकः ॥ २१

वाधूलो रोमशो वत्सः कुत्सः कात्यायनस्तथा ।
एते चान्ये च बहवो जितक्रोधा जितेन्द्रियाः ॥ २२

सर्ववेदान्ततत्वज्ञमगस्त्यं कुंभसंभवम् ।
जटामकुटशोभाढ्यं त्रिपुंड्रांकितमस्तकम् ॥ २३

अदाश्वुस्तपसा युक्तं रुद्राक्षकृतमण्डनम् ।
पप्रच्छुर्विनतास्सर्वे कृताञ्जलि पुटस्तथा ॥ २४

पञ्चाशत् कोटिविस्तीर्णे पावने त्विह भूतले ।
अत्युत्तमशिवक्षेत्रं कैलासाचलसंन्निभम् ॥ २५

कलिबाधाविनिर्मुक्तं कल्याणगुणशोभितम् ।
स्मरणादेव जन्तूनां मोक्षसाम्राज्यदायकम् ॥ २६

वदस्वास्मासु कृपया दिनेऽस्मिन् कुम्भसम्भव ।
इति संप्रार्थितो योगी मुनीन्द्रैः कलशोद्भवः ॥ २७

साम्बं सदाशिवं ध्यात्वा कालकण्ठमुमापतिम् ।
शरच्चन्द्रसमाकारमुखमण्डलशोभितम् ॥ २८

त्रिणेत्रं पञ्चवक्त्रं च चन्द्रलेखाशिखामणिम् ।
चारुनासापुटं रम्यं विद्रुमोष्ठविराजितम् ॥ २९

विभूत्या पांडरं शम्भुं कटाक्षैः कांक्षितार्थदैः ।
वाचामगोचरीभूतमहिमानं जगत्पतिम् ॥ ३०

नत्वा स्तुत्वा च शतशः क्षणमात्रं हृदम्बुजे ।
तुष्टोऽब्रवीत् मुनीन् सर्वान् लोकानां हितकाम्यया ॥ ३१

अगस्त्यः —

शृण्वन्तु मुनयस्सर्वे सावधानहृदन्तराः ।
अस्ति क्षेत्रं महापुण्यं कैलासाचलसन्निभम् ॥ ३२

सिद्धानां सिद्धिदं रम्यं शैलं सर्वप्रदायकम् ।
भूम्यन्तरिक्षस्वर्गेषु चिचित्रं राज्यदायकम् ॥ ३३

भूतसङ्घप्रशमनं भक्तरक्षाधुरंधरम् ।
पञ्चरात्रं त्रिरात्रं वा चैकरात्रं द्विजोत्तमाः ॥ ३४

निवासादश्वमेधानां अयुतस्यफलप्रदम् ।
तस्य क्षेत्रस्य माहात्म्यं के वा वक्तुमलं बुधाः ॥ ३५

अथापि जगतां नाथः सांबमूर्तिस्सदाशिवः ।
श्यामायै जगतां मात्रे प्रोक्तवान् किञ्चिदद्भुतम् ॥ ३६

वैद्यनाथस्य माहात्म्यं सर्वमङ्गलदायकम् ।

ईश्वरः –

शृणु देवि प्रवक्ष्यामि रहस्यमतिपावनम् ॥ ३७

वैद्यनाथमिथि ख्यातं गृध्रेशनगराभिधम् ।
धर्मार्थिनां धर्मदं तत् धनदं धनमिच्छताम् ॥ ३८

कामिनां कामदं ह्यं मुमुक्षूणां च मुक्तिदम् ।
पुत्रदं पुत्रकामानां सुखदं सुखमिच्छताम् ॥ ३९

राज्यदं राज्यकामानां शुभदं शुभमिच्छताम् ।
कन्यार्थिनां च कन्यादं रोगिणां रोगनाशनम् ॥ ४०

भूतप्रेतपिशाचानां विद्रावणविचक्षणम् ।
संसारसागरोन्मग्नजन्तूनामुडुपाधिपम् ॥ ४१

यस्मिंस्थले तु जातस्य जायमानस्य वा पुनः ।
जन्तोस्संसारबद्धस्य ब्रह्मानंदो न संशयः ॥ ४२

सप्तानामपि कोटीनां मन्त्राणां सिद्धिदं सदा ।
इन्द्रादयश्च दिक्पाला वसवाष्टौ मुनीश्वराः ॥ ४३

रूद्राश्च द्वादशादित्याः तत्र वैद्येश्वरस्थले ।
आराधयन्ति सिध्यर्थं वैद्यनाथं महेश्वरम् ॥ ४४

सह बालिकया नाम्ना मङ्गलाकारणत्वया ।
श्रीगन्धकण्ठ्याशर्वाण्या पूजितोऽस्मि महेश्वरि ॥ ४५

जटायुः भूमिपुत्रश्च स्रष्टा विघ्नेश्वरो गुहः ।
भवताग्रिणीर्भरद्वाजो रामो भानुश्शशी तथा ॥ ४६

लक्ष्मणार्जुननामा च श्रीमन्नारायणश्च गौः ।
हिरण्यवर्मा वेदाश्च सिद्धाश्च मुनिपुङ्गवाः ॥ ४७

ऋषयः किन्नरास्सिद्धाः गन्धर्वाश्चारणास्तथा ।
वैद्यनाथस्थले सिद्धिं प्रापुस्तत्र द्विजोत्तमाः ॥ ४८

शतानन्दो मुनिः पूर्वं वैद्यनाथं महेश्वरम् ।
आराध्य सुस्थले सिद्धिं प्राप तीर्थस्यवैभवात् ॥ ४९

तस्य चोत्तरभागे तु भद्रकाली मनोहरा ।
कालाञ्जनाभा कल्याणी मदाज्ञापरिपालिनी ॥ ५०

भूतप्रेतपिशाचानां निग्रहायत्तमानसा ।
सर्वेषामपि भक्तानां अभीष्टं प्रददात्यलम् ॥ ५१

ईशान्यां भैरवो देवो निग्रहानुग्रहे रतः ।
सर्वाभीष्टप्रदो नित्यं मदाज्ञां पालयत्यलम् ॥ ५२

दुर्गा दक्षिणदिग्भागे दुष्टानां निग्रहे रता ।
ममाज्ञां पालयन्ती सा तस्मिन् वसति सर्वदा ॥ ५३

प्रतीच्यां दिशि शास्ता च निग्रहानुग्रहोद्यतः ।
भक्तानां रोगहन्ता च नगरस्य च रक्षकः ॥ ५४

तस्मिन् सप्तमहातीर्थान्यद्भुतान्यतुलानि च ।
सन्ति सिद्धामृतं तेषु तीर्थं दक्षिणभागतः ॥ ५५

वालिकाया वायुभागे स्वेदतीर्थमिति श्रुतम् ।
अगस्त्यतीर्थं पूर्वस्मिन् भागे तु मुनिपुङ्गवाः ॥ ५६

गङ्गाकुण्डमिति ख्यातं आग्नेये तीर्थमुत्तमम् ।
कोदंडनदिनी नाम रामकोदण्डसंभवा ॥ ५७

धनुष्कोटिसमा दिव्या मणिकण्ठिकया समा ।
गौरीतीर्थमिति ख्यातं कावेर्यान्तर्गतं वरम् ॥ ५८

शक्तिगङ्गेति विख्यातं सिद्धामृत जलान्तरे ।
तस्य सिद्धामृतस्यैव नामानि युगभेदतः ॥ ५९

गोक्षीरमिक्षुसारं च गृध्रतीर्थमिति स्फुटम् ।
तस्मिन् सिद्धामृतेऽद्यापि मण्डूकाः श्यामरूपिणः ॥ ६०

शतानंदमुनेः शापात् न लक्ष्यन्ते मुनीश्वराः ।
गृध्रकुण्डमिति ख्यातं अस्ति दक्षिणभागतः ॥ ६१

तन्मृत्तिका धारणेन रोगा नश्यन्त्यसंशयः ।
तस्यैव नामधेयानि क्षेत्रस्य विलसन्त्यलम् ॥ ६२

गृध्रराजपुरं वेदपुरं स्कन्दपुरीति च ।
किं च सूर्यपुरी चेति विश्रुता जगती तले ॥ ६३

अनन्तानि च नामानि तस्य क्षेत्रस्य सन्ति वै ।
एतानि नामधेयानि प्रशंसन्ति च ये नराः ॥ ६४

पुमर्थान् सकलान् प्राप्य शिवसायुज्यमाप्नुयुः
तस्मिन् क्षेत्रे विशेषेण शक्तिमच्छिखिवाहनम् ॥ ६५

वरं ददाति सर्वेषां नियन्ता रक्षसामपि ।
भूतप्रेतपिशाचानां निग्रहे सुतरां पटुः ॥ ६६

सर्वाभीष्टप्रदं तत्र वैद्यनाथस्थले शिवाम् ।
बालिकां पूजयन्ति ये ते धन्याः श्रियमाप्नुयुः ॥ ६७

श्रुत्वा मुनीन्द्रास्सुतरां अगस्त्यात्
विचित्रामाख्यानमघौघनाशनम् ।
आनंदबाष्पांकितनेत्रपद्मा
स्त्वानन्दसिन्धौ नितरामतिमग्नाः ॥ ६८

प्रणम्य बद्धांजलयो मुनीन्द्राः
घटोद्भवं प्रति वाचमूचुः ।
जटायुजस्कंदपुरीश्वरस्य
श्री वैद्यनाथस्य महाप्रभावम् ॥ ६९

श्रुत्वा कृतार्थास्सुतरां भवतः
घटोद्भव त्वत्कृपयाऽधुनैते ।
माहात्म्यमत्यद्भुतमेनदत्र
नगाधिराजस्य कुमारिकायै ॥ ७०

कदाब्रवीत्कारणतो महेशो
जटायुजस्कन्दपुरीश्वरस्य ।
शिवस्य माहात्म्यमुदारभावं
तदेतदद्य प्रवदस्व हे मुने ॥ ७१

मुनीश्वराणां वचनं निशम्य
घटोद्भवो वक्तुमुदारधीरयम् ।
प्रचक्रमे यच्छ्रवणेन देहिनां
भवन्ति सद्यः पुरुषार्थपङ्क्तयः ॥ ७२

यद्रम्यभावं महिमानमस्य
शृण्वन्ति भक्त्या सह पुत्रदारैः ।
नचैहिकान् प्राप्य समस्तभोगान्
संप्राप्नुयुस्तत्पदमेव सत्यम् ॥ ७३

इति श्रीशैवपुराणे कोटिरुद्रसंहितायां उत्कृष्टशिवक्षेत्रप्रकरणे
श्रीवैद्यनाथस्थानमाहात्म्ये प्रथमोऽध्यायः ॥

---

## ॥ द्वितीयोऽध्यायः ॥

अगस्त्यः —

शृण्वन्तु मुनयस्सर्वे यदि श्रोतुं तदिच्छथ ।
श्रोतॄणां निधनं वक्ष्ये माहात्म्यं त्रिपुरद्विषः ॥ १

सत्कथाश्रवणं शम्भोस्संसारभयनाशनम् ।
सद्यो मुक्तिकरं श्लाघ्यं पवित्रं पापनाशकम् ॥ २

अज्ञानातिमिरान्धानां दीपायितमलं बुधाः ।
भवरोगनिबद्धानां संसेव्यं परमौषधम् ॥ ३

ये पिबन्ति कथां शम्भोः कथा पीयूषवाहिनी ।
ते वै मनुष्यलोकेऽस्मिन् रुद्रा एव न संशयः ॥ ४

यद्यशक्तस्सदा श्रोतुं कथां पौराणिकीं नरः ।
मुहुर्तं वापि शृणुयान्नियतात्मा दिने दिने ॥ ५

यत्फलं सर्वयज्ञेषु सर्वदानेषु यत्फलम् ।
सकृन्माहात्म्यश्रवणात् तत्फलं विन्दते नरैः ॥ ६

बालो वा यदि वा वृद्धो दरिद्रो दुर्बलोऽपि वा ।
पुराणज्ञः सदा वन्द्यः पूज्यश्चासौ कथार्थिभिः ॥ ७

नीचबुद्धिं न कुर्वीत पुराणज्ञे कदाचन ।
यस्य वक्त्रोद्गता वाणी कामधेनुश्शरीरिणाम् ॥ ८

पुराणज्ञः शुचिर्दान्तः शान्तो विगतमत्सरः ।
सदा कारुण्यवान् वाग्मी वदेत् पुण्यकथास्सुधीः ॥ ९

व्यासासनसमारूढो यदा पौराणिको द्विजः ।
आसमाप्तेःप्रसङ्गस्य नमस्कुर्यान्न कस्यचित् ॥ १०

ये धूर्ता ये च दुर्वारा ये चान्ये विजिगीषवः ।
तेषां कुटिलवृत्तीनामग्रे नैव वदेत् कथाम् ॥ ११

अदुर्जनसमाकीर्णे पुण्यतीर्थे च संक्रमे ।
पुण्ये वाथ नदीतीरे वदेत् शिवकथां सुधीः ॥ १२

श्रद्धाभक्तिसमायुक्ता नान्यकार्येषु लालसाः ।
वाग्यताः शुचयो व्यग्राः श्रोतारः पुण्यभागिनः ॥ १३

अभक्त्या ये कथां पुण्यां शृण्वन्ति मनुजाधमाः ।
तेषां पुण्यफलं नास्ति दुःखं स्याज्जन्मजन्मनि ॥ १४

पुराणं ये त्वसंपूज्य तांबूलाद्युपचारतः ।
शृण्वन्ति च कथां पुण्यां दरिद्रास्स्युर्न संशयः ॥ १५

कथायां कीर्त्यमानायां ये गच्छन्त्यन्यतो नराः ।
भोगान्तरे प्रणश्यन्ति तेषां दाराश्च संपदः ॥ १६

ये च तुङ्गासनारूढाः कथां शृण्वन्ति डांभिकाः ।
अक्षयान्नरकान् भुक्त्वान्ते भवन्त्येव वायसाः ॥ १७

ये च वीरासनारूढाः ये चोच्चासनसंस्थिताः ।
शृण्वन्ति सत्कथां ते तु भवन्त्यर्जुनपादपाः ॥ १८

असंप्रणम्य शृण्वन्ति विषवृक्षा भवन्ति ते ।
कथां शयानाः शृण्वन्ति भवन्त्यजगरा नराः ॥ १९

यः शृणोति कथां वक्तुः समानासनमाश्रितः ।
गुरूतल्पसमं पापं संप्राप्य नरकं व्रजेत् ॥ २०

ये निन्दन्ति पुराणज्ञं कथां पापापहारिणीम् ।
ते वै जन्मशतं मर्त्याः शुनकास्सम्भवन्ति वै ॥ २१

कथायां वा कीर्त्यमानायां ये वदन्ति दुरूत्तरम् ।
ते गर्दभाः प्रजायन्ते कृकलासास्ततःपरम् ॥ २२

कथायां कीर्त्यमानायां विघ्नं कुर्वन्ति ये नराः ।
अर्बुदं नरकान्भुक्त्वा भवन्ति ग्रामसूकराः ॥ २३

आसनार्द्धं प्रयच्छन्ति पुराणज्ञाय ये नराः ।
कम्बलाजिनवासांसि मञ्च फलकमेव वा ॥ २४

स्वर्गलोकं समासाद्य भुक्त्वा भोगान् यथेप्सितम् ।
स्थित्वा ब्रह्मादिलोकेषु प्रयान्ति च निरामयम् ॥ २५

माहात्म्यस्य प्रयच्छन्ति ये सूत्रं चाजिनं नवम् ।
भोगिनो ज्ञानसंपन्नाः ते भवन्ति भवे भवे ॥ २६

एवं नियमसंयुक्तो वक्ता श्रोता भवेद्द्विजाः ।
तस्माद्वैद्येशमाहात्म्यं सावधानेन चेतसा ॥ २७

श्रृण्वन्तु मुनयस्सर्वे श्रद्धाभक्तिसमन्विताः ।
पुरा वसिष्ठो भगवान् एवं नियमसंयुतः ॥ २८

श्रुत्वा माहात्म्यमखिलं प्राप भार्यामरुन्धतीम् ।
हिरण्यवर्मा भूपालः कुष्ठरोगेण पीडितः ॥ २९

एतस्य श्रवणादेव तप्तजाम्बूनदप्रभः ।
एकच्छत्रां महीं भुक्त्वा चान्ते कैलासमाप्तवान् ॥ ३०

सहस्त्राक्षः पुरा विप्राः श्रुत्वा माहात्म्यमुत्तमम् ।
शत्रुं वृत्रासुरं जित्वा देवराट् च ततोऽभवत् ॥ ३१

बाहुलेयोऽपि तच्छ्रुत्वा माहात्म्यं जगदीशतुः ।
तारकासुरसंहर्ता जातस्सोयं जगत्रये ॥ ३२

बहुनात्र किमुक्तेन चन्द्रसूर्यादयस्तथा ।
वसवो द्वादशादित्या अन्ये देवर्षयः परे ॥ ३३

तत्तत्पदं प्राप्नुवन्तः श्रुत्वा वैद्येशितुः परम् ।
माहात्म्यं सर्वसौभाग्य सिद्धिदं सर्वदेहिनाम् ॥ ३४

माहात्म्यस्यास्य लोकेऽस्मिन् वक्ता श्रोता च दुर्लभः ।
अथापि वक्ष्ये युष्माभिः प्रार्थितोऽहं मुनीश्वराः ॥ ३५

इदं वै स्थानमाहात्म्यमादितस्तु शृणोति यः ।
पठेद्वा शिवसायुज्यं लभतेऽत्र न संशयः ॥ ३६

एतच्छ्रुत्वा मुनीन्द्रास्ते पुलकाङ्कितविग्रहाः ।
महात्मानो महाभागाः सर्वे सन्तुष्टमानसाः ॥ ३७

आनन्दाबुनिधौ मग्नाः पुनः पप्रच्छुरादरात् ।

श्रुत्वा तदीयवचनं हृदि साम्बुमूर्तिं
स्मृत्वा च सोमकलयाकलितोत्तमाङ्गम् ।
वक्तुं समारभत वाचमतिप्रगल्भां
कुम्भोद्भवो मुनिरमन्दसुखाब्धिमग्नः

इति श्रीशैवपुराणे कोटिरुद्रसंहितायां उत्कृष्टशिवक्षेत्रप्रकरणे
श्रीवैद्यनाथस्थानमाहात्म्ये द्वितीयोऽध्यायः ॥



## ॥ तृतीयोऽध्यायः ॥

अगस्त्यः —

शृणुध्वं संप्रवक्ष्यामि वैद्यनाथस्य वैभवम् ।
यस्य श्रवणमात्रेण चतुर्वर्गः प्रजायते ॥ १

पुरा रौप्यगिरौ शम्भुः निवसन्तु मया सह ।
सर्वप्रपञ्चरक्षायां जागरूको महेश्वरः ॥ २

ब्रह्मादिभिर्देववृन्दैः वन्द्यमानपदाम्बुजः ।
कदाचिदचलात्तस्मात् क्रीडार्थं निर्गतो मुदा ॥ ३

शौर्येणसाकं मन्दरद्रिमगच्छद्वसच्चिरम् ।
मन्दरान्निर्गतस्तस्मादोषधिप्रस्थमाप्तवान् ॥ ४

गौर्या चिरमुषित्वाथ पादे कैलासपर्वते ।
पुनः प्राप्य महेशानश्चचार युवरूपधृक् ॥ ५

गौर्या सह सुरारामे पारिजात समाकुले ।
मन्दारकल्पवृक्षाख्ये श्रीगन्धनिकरावृते ॥ ६

हरिचन्दनसंश्लिष्टे सन्ताननिबिडे वरे ।
शैत्यसौरभ्य मांद्यैश्च वायुभिश्चलभूरुहे ॥ ७

सरसीभिरनेकाभिः हेमपङ्कजचारुभिः ।
कल्हारकुमुदालिभि· नीलोत्पलसुगन्धिभिः ॥ ८

सोपानैरुज्ज्वलैश्चैव हंसकारन्टवाकुलैः ।
भासमानो महान् तत्र क्रीडाशैलो विराजते ॥ ९

तस्मिन् भूमिरुहास्सर्वे हेमरूपा लसन्त्यलम् ।
क्रीडाशैलस्य तस्यैव गुहायां यौवनोद्भवाः ॥ १०

यक्षाश्च किन्नराश्चैव गन्धर्वास्सिद्धचारणाः ।
क्रीडन्त्यहर्निशं सर्वे स्वस्वदारेषु संवृताः ॥ ११

तत्रैकदेशे पुरुषास्त्रिनेत्राः शूलधारिणः ।
भस्मोद्धूलितसर्वाङ्गाः चन्द्रखण्डसुमण्डिताः ॥ १२

रुद्राक्षमालाभूषाश्च वामभास्वद्वराङ्गनाः ।
शिवध्यानरताश्चैव गौरीपूजनतत्पराः ॥ १३

स्वतेजोभिर्दिशास्सर्वा भासयन्तो दिवानिशम् ।
तान् सर्वान् परमेशान स्वकारानद्भुतानपि ॥ १४

दृष्ट्वा सा विस्मिता गौरी तस्मिन्नुद्यान पर्वते ।
किञ्च प्रदेशान्तरस्य पर्वतस्योत्तरेपुनः ॥ १५

अपश्यत् परमत्यन्तभासुरं किञ्चिदद्भुतम् ।
सहस्रमानहेमाभं द्वात्रिंशद्योजनावृतम् ॥ १६

नवरत्नमयं रम्यं नानाधातूपशोभितम् ।
कलधौतमयैः कुड्यैः चतुरस्रगृहाङ्गणैः ॥ १७

चन्द्रकान्तशिलारूपैः प्रासादैरुपशोभितम् ।
तन्त्रेन्द्रनीलखचितमण्डपोद्भासितान्यपि ॥ १८

चतुर्दिक्षु च दिव्यानि नवरत्नमयान्यपि ।
रत्नधामान्यनेकानि निधीनां ह्यास्पदान्यपि ॥ १९

लसन्त्यनुपमाकाराण्यतिचित्राणि सर्वतः ।
तेष्वत्यद्भुतलावण्याः सर्वाः षोडशवार्षिकाः ॥ २०

प्रपञ्चमोहकास्सर्वे कोटिमन्मथविग्रहाः ।
शिवानन्दामृतास्वादाः शिवा रन्ध्रे शिवार्चकाः ॥ २१

स्त्रियो यौवनसम्पन्नाः सर्वा द्वादशवार्षिकाः ।
प्रातस्सम्फुल्लकमलपरिहासि पदाम्बुजाः ॥ २२

मत्तमन्मथतूणीरजन्घाद्वन्द्वविराजिताः ।
मणिदर्पणसङ्काशजानुमण्डलमण्डिताः ॥ २३

रणन्मणिमयाकारनूपुरद्वयशोभिताः ।
शातकुम्भमयाकार रम्भास्तम्भोप शोभिताः ॥ २४

तप्तजाम्बूनदक्लृप्तकाञ्चीगुणसुशोभिताः ।
अस्तिनास्तीतिविषयसन्देहाद्भुतमध्यमाः ॥ २५

सौन्दर्यलहरीपूर्णनाभीह्रदविराजिताः ।
रोमराजिनदीरम्यतरङ्गस्रुवलित्रयाः ॥ २६

एकनालीसमुद्भूतपद्मकोशकुचद्वया: ।
गलशङ्खगलद्रत्नहारपीपूषधारिका: ॥ २७

कुचसिंहासनारूढमारराजाभिषेचका: ।
शिरीषकुसुमाक्लिप्तमाल्यरम्य भुजद्वया: ॥ २८

इन्दीवरदलाकार नयनद्वयशोभिता: ।
अकलङ्कशरच्चन्द्रमुखमण्डलशोभिता: ॥ २९

अष्टमीचन्द्रसंशोभिललाटतटमण्डिता: ।
नासिकाकदलीरम्यदलभ्रुलतिकान्विता: ॥ ३०

सिन्धूरबन्धुकारश्रीसीमन्तमणिशोभिता: ।
कन्दर्परथचक्रायताटङ्कद्वयशोभिता: ॥ ३१

कौसुम्भदिव्यग्रथितकञ्चुकोपरिमण्डिता: ।
कर्पूरदिव्यवीटीभिरामोदितदिगन्तरा: ॥ ३२

एवंभूता: पुन:श्यामा रमणैस्वै र्लसन्त्यहो ।
दृष्ट्वातिविस्मिता गौरी कैलासावनि शेखरे ॥ ३३

रमणं शिवमाहेति कृताञ्जलिपुटा तदा ।
देवीस्वामिन् शम्भो महादेव ममाभीष्टप्रदायक ॥ ३४

नमस्ते देवदेवेश नमस्ते भक्तवत्सल ।
नमस्ते जगदीशान नमस्ते दिव्यमङ्गल ॥ ३५

जय देव महादेव जय सर्वजगत्पते ।
यद्यस्ति करुणा मेऽद्य निस्सन्देहां कुरुष्व माम् ॥ ३६

इति संप्रार्थितो गौर्या प्रियवाक्यानुरञ्जितः ।
अब्रवीदद्भुतं वाक्यं साम्बो गम्भीरया गिरा ॥ ३७

साधु पृष्टमिदं साधु कल्याणि मङ्गलेऽधुना ।
त्वदभीष्टवरं दास्ये त्वत्संशयमुदाहर ॥ ३८

इति तद्वचनं श्रुत्वा गौरी भर्तारमब्रवीत् ।
गौरीस्वामिन् तस्मिन् गिरौ त्वदाकारा महोन्नताः ॥ ३९

युवानः पुरुषाश्चैव त्वच्चिह्नपरिभासुराः ।
मदाकारा युवत्यश्च भासन्ते किमिदं प्रभो ॥ ४०

अद्भुतं किमिदं शम्भो किं भ्रमो मम तद्वद ।
एतावत्कालपर्यन्तं त्वद्रूपाः पुरुषाः पुनः ॥ ४१

मद्रूपाः च स्त्रियश्चापि न सन्तीति मतिर्मम ।
तद्वैपरीत्यमधुना दृष्टमत्र दयानिधे ॥ ४२

केन वा हेतुना सर्वे पुरुषाश्च स्त्रियश्च ताः ।
त्वद्रूपाश्च मदाकारा जातास्तद्वद मे प्रभो ॥ ४३

इति गौर्या वचः श्रुत्वा प्रोवाच परमेश्वरः ।
एते च पुरुषास्सर्वे श्यामाः सर्वाश्च ताः पुनः ॥ ४४

वैद्यनाथस्थलावासात् मदीयार्चनवैभवात् ।
तत्स्थानसेवनं (कृत्वा) सर्वसौभाग्यवान्भवेत् ॥ ४५

तन्मे प्रियतरं विद्धि वैद्यनाथस्थलं शुभम् ।
वैद्यनाथस्थले तत्र गृध्रेणाराधितो ऋचा ॥ ४६

रामेण पूजितस्सोऽहं स्कन्देन रविणापि च ।
तत्स्थानं प्रथितं भूमौ गृध्रऋक्सूर्यनामकम् ॥ ४७

श्वशुरावासभूमिर्यो हिमाद्रिर्मम भामिनि ।
ततोऽपि वैद्यनाथेऽस्मिन् स्थले प्रीतिर्न संशयः ॥ ४८

मरुद्वृधातटे पुण्ये पदानि मम सन्ति वै ।
स्वयंभूनि सहस्राणि प्रसिद्धानि नगात्मजे ॥ ४९

सहस्रेषु पदेष्वेषु मदीयेषु च भामिनि ।
अतिप्रियकराण्यद्य प्रवक्ष्यामि च तान्यहम् ॥ ५०

इति श्रीशैवपुराणे कोटिरुद्रसंहितायां उत्कृष्टशिवक्षेत्रप्रकरणे श्रीवैद्यनाथस्थानमाहात्म्ये गौरीसंवादो नाम तृतीयोऽध्यायः ॥

---

# ॥ चतुर्थोऽध्यायः ॥

अगस्त्यः —

प्रभावमतिपुण्यानां मदीयानां महेश्वरि ।
मरुद्वृधातटस्थानां नामानि प्रवदाम्यहम् ॥ १

स्थाननाम कथ्यतेऽद्य सावधानयुता शृणु ।
कावेर्यास्तीरयोर्नद्याः पुण्ययोरुभयोरपि ॥ २

स्वायम्भून्युत्तमान्येव प्रवक्ष्यामि यथाक्रमम् ।
प्रिये रत्नगिरिर्नाम कावेर्या दक्षिणे तटे ॥ ३

अस्ति क्षेत्रं महापुण्यं सर्वसौभाग्यदायकम् ।
तस्मिन् स्थले त्वया साकं निवसामि मुदा प्रिये ॥ ४

तस्य रत्नगिरेः शृङ्गे कल्पद्रुम समा द्रुमाः ।
चम्पकास्त्वथ चाम्पेयाः पनसाः पाटलास्तथा ॥ ५

चन्दनाः पारिजाताश्च सर्वदा विलसन्ति च ।
कावेर्याश्चोत्तरे भागे मक्षिकापर्वतोत्तमे ॥ ६

अस्ति तीर्थं महापुण्यं अमृताकारमद्भुतम् ।
तस्य तीर्थस्य पानेन जरामरणवर्जिताः ॥ ७

तत्रत्याजन्तवस्सर्वे तद्रक्षास्तमलं प्रिये ।
तत्रापि च त्वया सार्धं सर्वदा निवसाम्यहम् ॥ ८

कावेर्याश्चोत्तरे तीरे कुण्डस्थण्डिलमुत्तमम् ।
भाति तत्रोत्तरमुखः सर्वदा निवसाम्यहम् ॥ ९

मामिहैवाराजद्ब्रह्मा काशिक्षेत्रसमे पुरा ।
कुण्डस्थण्डिलनाम्नोऽस्य पूर्वस्यां दक्षिणे तटे ॥ १०

दर्विकातीर्थमाभाति तत्रापि निवसाम्यहम् ।
तस्य पूर्वे महत् क्षेत्रं मदीयं भाति सर्वदा ॥ ११

पनसादौ सुरैस्साकं त्वयापि निवसाम्यहम् ।
कावेर्या दक्षिणे तीरे त्रिशिरस्स्थानपर्वते ॥ १२

नवरत्नमयैः कुड्यैः प्रासादैरूज्ज्वले वरे ।
निवसामि सुरैस्सार्धं पश्चिमाभिमुखे सदा ॥ १३

गजारण्यमिति ख्यातं कावेर्याश्चोत्तरे तटे ।
अखिलाण्डांबया साकं ज्ञानभूमौ वसाम्यहम् ॥ १४

पुण्यं सप्तमुनिस्थानं तस्य पूर्वे विराजते ।
तस्मिन्नपि गणैस्साकं पश्चिमाभिमुखे सदा ॥ १५

निवसामि त्वया सार्धं सर्वसौभाग्यदायिनि ।
कावेर्याश्चोत्तरे तीरे स्थांडीश्वरमनुत्तमम् ॥ १६

भाति तत्रामरैस्सार्धं सर्वदा निवसाम्यहम् ।
कावेर्याश्चोत्तरेतीरे जल्पेश्वरमनुत्तमन् ॥ १७

तस्मिन् जल्पेश्वरे पुण्या नाम्ना पञ्चनदे शुभे ।
तत्रन्यानां च जन्तूनां मृतिकाले दयायुतः ॥ १८

अहं तारकमन्त्रस्य मर्म वक्ष्यामि सर्वदा ।
कावेर्या दक्षिणेतीरे पुण्यं पुष्पवनाभिधम् ॥ १९

तत्र वासोमरैस्माकं मम प्रियतरं प्रिये ।
कावेर्या दक्षिणेतीरे तज्ञीश्वरमनुत्तमम् ॥ २०

आनन्दवल्लीदेव्या च त्वया सह वसाम्यहम् ।
तस्य चोत्तरभागेतु कावेर्या दक्षिणे तटे ॥ २१

श्रीकण्ठनगरे तत्र वीरस्थाने वसाम्यहम् ।
ममाभिमतमत्यन्तं मुक्तिस्थानं च तद्भुवि ॥ २२

तस्य पूर्वे महत् क्षेत्रं पवित्रं पापनाशनम् ।
श्रीशब्दपूर्वं विख्यातं नाम्ना जीवन्तिकास्थलम् ॥ २३

यत्तीर्थं श्रीवटाख्यं तत् भाति तत्र ममास्पदम् ।
सार्धं कोटिगणैर्गौरित्वया सह वसाम्यहम् ॥ २४

अन्यदत्यद्भुतं पूर्वे कावेर्या दक्षिणेतटे ।
कुम्भघोणमिति ख्यातं अस्तिक्षेत्रं महद्भुवि ॥ २५

तत्र संवसतां देवि नराणामस्ति निश्चयम् ।
हे[illegible] निश्चितं स्यात् [illegible] ॥ २६

नाम्ना कुम्भेश्वरस्तत्र सप्तस्थानेश्वरावृते ।
विवसामि त्वया सार्द्धं जगतामधिनायिके ॥ २७

मरुद्वृधायास्तीरे तत् सोमेश्वरमिति श्रुतम् ।
तस्मिन् स्थले त्वया साकं निवसाम्यखिलेश्वरि ॥ २८

पट्टीश्वरमिति ख्यातं कावेर्या दक्षिणे तटे ।
तत्रापि च त्वया सार्द्धं वसामि निखिलेश्वरि ॥ २९

कावेर्या दक्षिणे तीरे विश्रुतं जगतीतले ।
स्थानं त्रिभुवनं नाम महदस्ति ममास्पदम् ॥ ३०

तस्मिन् स्थले त्वया सार्धं निवसामि महेश्वरि ।
अन्यदत्यद्भूतं गौरि ब्रह्महत्याविनाशकम् ॥ ३१

मध्यार्जुनमिति ख्यातं त्रिषु लोकेषु विश्रुतम् ।
तस्य क्षेत्रस्य माहात्म्यं कोवा वर्णयितुं क्षमः ॥ ३२

तस्मिन् स्थले महालिङ्गः निवसामि त्वया सह ।
तस्य स्वयम्भुस्थानस्य पूर्वस्यां मत्प्रियं स्थलम् ॥ ३३

महद्वधायास्तीरे तत् दक्षिणे सकलं प्रदम् ।
गोमुक्तीशमिति ख्यातं त्रिषु लोकेषु विश्रुतम् ॥ ३४

गोमुक्तीश त्वया तत्र सदाऽतुल कुचाख्यया ।
निवसामि मुदानॄणां वसतां मोक्षदायकः ॥ ३५

आश्चर्याणि च वराणि मदीयानि विभान्त्यपि ।
ऋषीणां मण्डलं तत्र बहूनामपि वर्तते ॥ ३६

वसवोऽष्टौ च रुद्राश्च द्वादशादित्यदेवताः ।
सर्वाश्च शक्तयश्चापि तत्र गोमुक्तिशङ्करम् ॥ ३७

आराधयन्ति सिद्ध्यर्थं मम प्रियमुमे भृशम् ।
तस्य चोत्तर भागे तु त्रिकोटीश्वरनामकम् ॥ ३८

अस्ति क्षेत्रं महापुण्यं सर्वमङ्गलदायकम् ।
निवसामि त्वया तत्र सर्वदा जगदीश्वरी ॥ ३९

मरुद्वृथातटे पूर्वदक्षिणे भीमदायके ।
मायूरमिति विख्यातं काशिक्षेत्रसमं शुभम् ॥ ४०

मम प्रीतिकरं श्रेष्ठं अद्भुतं पापनाशनम् ।
तत्र देवैस्समस्तैश्च पूज्यमानपदाम्बुजः ॥ ४१

अभयाम्बिकया साकं त्वया देवी वसाम्यहम् ।
एतेषु पुण्यक्षेत्रेषु मदीयेषु सदा मम ॥ ४२

आवासो लोकरक्षार्थं तथापि शृणु मे वचः ।
रहस्यभूतमत्यन्तं तत् सुखावहहेतुकम् ॥ ४३

अनन्तशक्तिसहिते स्वयंलिङ्गे मनोहरे ।
उत्तरे सह्यजायाश्च पावने पपानाशके ॥ ४४

पुण्ये प्रधानभूतेऽस्मिन् क्षेत्राणामुत्तमोत्तमे ।
वैद्यनाथस्थले प्रीतिगौर्यावासेति निर्मले ॥ ४५

नाम्ना श्रीगन्धकण्ठी च त्वन्मूर्तिः शुभदायिनी ।
अनन्तशक्तियुक्ता सा सर्वाभीष्टप्रदायिनी ॥ ४६

तया श्रीगन्धकण्ठश्चाहं कोशशक्तिसमाहितः ।
सर्वेषां सर्वदा नित्यं ग्रहनिग्रहसादरः ॥ ४७

स्वामी च षण्मुखस्तेषां नियन्ता रक्षसामपि ।
वसत्यनुदिनं तत्र मदाज्ञापरिपालकः ॥ ४८

त्रिषु भूरादिषु शिवे मदीयेषु पदेष्वपि ।
षष्टिकोटि सहस्रेषु प्रत्येक शरदां शतम् ॥ ४९

शिवार्चनपराणां तु श्रेयो भवति यन्नृणाम् ।
ततोऽधिकं महच्छ्रेयः सकृद्वैद्येश्वरस्थले ॥ ५०

अचिकित्सा चिकित्सेशं सर्वाभीष्टप्रदायकम् ।
बिल्वैरर्चयतां पुंसां भवत्येव न संशयः ॥ ५१

अभिषेकं च नैवेद्यं ताम्बूलं च प्रदक्षिणम् ।
नमस्कारो जयश्चैव दानानि द्विजभोजनम् ॥ ५२

ये कुर्वन्ति नरा भक्त्या तेषां पुण्यफलं शृणु ।
रोगार्तो रोगनिर्मुक्तो नेत्रार्थी नेत्रमाप्नुयात् ॥ ५३

पुत्रार्थी लभते पुत्रं धनार्थी धनमाप्नुयात् ।
भूतप्रेतपिशाचाद्यैः ग्रस्ताश्चेन्मनुजाः स्त्रियः ॥ ५४

तद्दोषेभ्यो विनिर्मुक्ताः सर्वान् कामानवाप्य च ।
त्रिसप्तकुलमुद्धृत्य व्रजेयुर्मत्पदं ध्रुवम् ॥ ५५

स्नात्वा सिद्धामृते गौरी गोक्षीराख्येति निर्मले ।
कल्पकाख्यं गणपतिं सर्वाभीष्टप्रदायकम् ॥ ५६

श्रीगन्धकण्ठीं त्वां मां च त्वत्पुत्रं षण्मुखं प्रिये ।
सेवन्ते ये नरा भक्त्या स्तुवन्ति स्तुतिवाङ्मयैः ॥ ५७

ते सर्वे भवरोगैश्च विनिर्मुक्ता भवन्त्यमी ।
ग्रहादिपीडया मुक्ता इति तत्र किमद्भुतम् ॥ ५८

प्राप्नुवन्ति परां मुक्तिं भुक्त्वा भोगाननेकशः ।
वैद्यनाथस्थले पूजां विशेषात् कल्पयन्ति ये ॥ ५९

मदास्थाननिवासास्ते कल्पे कल्पे भवन्त्यहो ।

अगस्त्यः —

तच्छ्रुत्वा वचनं तस्य पार्वती जगदम्बिका । ६०

आनन्दाम्बुधिकल्लोलस्वान्तरा गिरिजा तदा ।
पादाब्जं परमेशस्य प्रणनाम मुहुर्मुहुः ॥ ६१

प्रोवाच गिरिजा शम्भुं सर्वाभीष्टप्रदायकम् ।

देवी —

शिवशम्भो महादेव ममानन्दकरेश्वर ॥ ६२

अनन्तशक्तिसहिता चाप्सरोभिः समावृता ।
वैद्यनाथस्थले वस्तुं त्वया सार्द्धं महेश्वर ॥ ६३

वाञ्छामि वाञ्छितार्थानां दायक श्रीमहेश्वर ।
इति संप्रार्थितो गौर्या शिवं आह यथेच्छया ॥ ६४

शिवः —

तथास्तु गौरि भद्रं ते गच्छ शक्तिभिरादरात् ।
वैद्यनाथस्थले पुण्ये मामर्चय सुहृद्गणैः ॥ ६५

अहं प्रत्यक्षभूतस्सन् वरं दास्ये परिग्रहम् ।
चतुःषष्टिकलाख्येषु पीठेषु मधुरादिषु ॥ ६६

स्वत्पदेषु प्रियं गौरि वैद्यनाथस्थलं मम ।
इति शम्भोर्वरान् गौरी कैलासावनि शेखरात् ॥ ६७

वैद्यनाथस्थलं गन्तुं समुद्युक्ताऽभवद्विजाः ॥ ६८

अगस्त्यः —

श्रीशम्भोर्मुखमण्डलाद्विगलितं शैवं चरित्रं पुनः
ये शृण्वन्ति च मानवा भुवि परन्ते पुत्रपौत्रादिकान् ।
आयुर्दीर्घमरोगतामपि सदाश्चर्याढ्यमव्याहतं
संप्राप्यान्तिमकाल एव नितरां निश्श्रेयसं प्राप्नुयुः ॥ ६९

इत्यगस्त्यवचः श्रुत्वा ते सर्वे मुनिपुङ्गवाः ।
प्रमोदं प्राप्नुयुस्तत्र शुभदे मलयाचले ॥ ७०

ततस्ते मुनयस्सर्वे बद्धाञ्जलि पुटास्तदा ।
पप्रच्छुरादरेणैव पुनस्तं कुम्भसम्भवम् ॥ ७१

इति श्रीशैवपुराणे कोटिरुद्रसंहितायां उत्कृष्टशिवक्षेत्रप्रकरणे श्रीवैद्यनाथस्थानमाहात्म्ये चतुर्थोऽध्यायः ॥

## ॥ पञ्चमोऽध्यायः ॥

अगस्त्यः –

अथ गौरी जगन्माता सर्वभूतहिते रता ।
प्रदक्षिणैर्नमस्कारैस्तोषयित्वा महेश्वरम् ॥ १

स्तुत्वा स्तुतिशिरोभिश्च बद्धाञ्जलिपुटा ततः ।
अनुज्ञाप्य महेशानं भगवन्तं पुनः पुनः ॥ २

स्वामिन् दयानिधे तत्र वैद्यनाथस्थले मम ।
यत्त्वयाज्ञा प्रदत्ता हि शीघ्रं गच्छाम्यहं प्रभो ॥ ३

इत्युक्त्वा निर्जगामासौ तस्माद्रौप्याचलाच्छिवा ।
चतुःषष्टिकलाकारा सर्वलक्षणसंयुताः ॥ ४

शक्तिभिः कोटिसंख्याभिः अनेकाभिस्समन्विता ।
नवरत्नमयं दिव्यं विमानमधिरुह्य च ॥ ५

निर्याणतूर्यसम्भिन्नसर्वदिग्गण्डकुण्डिका ।
अकुतोभयवाणीभिर्वर्ण्यमानाभिरद्भुतम् ॥ ६

मातर्जय जयेत्येवं सेव्यमानपदाम्बुजा ।
इन्द्रादिभिश्च दिक्पालैः ब्रह्मविष्णुमुखामरैः ॥ ७

बद्धाञ्जलिपुटैस्सर्वैः देववृन्दैर्नमस्कृता ।
अनेककोटिसंख्याकैर्ध्वजैश्छत्रैस्समन्विता ॥ ८

मणिचामरवृन्दैश्च वीज्यमानपदांबुजा ।
गीयमाना विपञ्च्या च सरस्वत्या च वाङ्मयैः ॥ ९

श्रिया वाङ्मिश्रणं कृत्वा लसन्ती गगनान्तरे ।
अप्सरोभिरनेकाभिः नृत्यमानदिगन्तरा ॥ १०

बृन्दारवृन्दसङ्कीर्णा पुष्पवृष्ट्या समर्चिता ।
वसुभिर्द्वादशादित्यै मरुद्भिरपि सेविता ॥ ११

नारदाद्यैर्मुनीन्द्रैश्च स्तूयमाना पुनः पुनः ।
गन्धर्वैश्चारणैस्सिद्धैः तथा किन्नरजातिभिः ॥ १२

यक्षैश्च पन्नगैश्चैव बद्धाञ्जलिपुटैस्तदा ।
अनेककोटिसंख्याकैरावृता जगदीश्वरी ॥ १३

मेरोर्दक्षिणपार्श्वस्थं केदारक्षेत्रमुत्तमम् ।
आगत्य तत्र केदारनायकं जगतीपतिम् ॥ १४

आनम्य शतशस्तत्र समभ्यर्च्य जगत्पतिम् ।
ततो वाराणसीं प्राप्य गङ्गातीरविराजितम् ॥ १५

विश्वेश्वरं महादेवं विरूपाक्षं दयानिधिम् ।
अभ्यर्च्य देवदेवेशं अखण्डानन्दविग्रहम् ॥ १६

यत्र देवो महादेवो जन्तूनां सर्वदा पुनः ।
तारकब्रह्म सर्वेषां उपदेष्टा विराजते ॥ १७

तां राजधानीं शैवां च दृष्ट्वा दृष्ट्वा पुनः पुनः ।
आनन्दसागरोन्मग्नचित्तामत्तेभगामिनी ॥ १८

अनुज्ञाप्य महेशानं विश्वेशं जगतीपतिम् ।
ततस्तु नैमिशारण्यं गत्वा नत्वा महेश्वरम् ॥ १९

तत्रत्यान् ऋषिसन्घांश्च समनुज्ञाप्य पार्वती ।
कुरुक्षेत्रं ततो गत्वा नत्वा तत्रत्यमीश्वरम् ॥ २०

अर्चयित्वा महेशानं स्तुत्वा स्तुत्वा च वाङ्मयैः ।
अनुज्ञाप्य महादेवं तत्र श्रीशैलमुत्तमम् ॥ २१

श्रीशैलशिखरे देवमम्बिकारमणं प्रभुम् ।
अर्चयित्वा ततो नत्वा स्तुत्वा श्रुतिभिरव्ययम् ॥ २२

तमनुज्ञाप्य देवेशं कालहस्तिस्थलं महत् ।
अभिषेकक्रियाभिस्तां सुवर्णमुखरी नदीम् ॥ २३

अनुग्राह्य महादेवं कालहस्तीश्वरं प्रभुम् ।
पूजयित्वा यथान्यायमर्चयित्वा पुनः पुनः ॥ २४

ततः काञ्चीपुरीं प्राप्य कल्याणगुणदायिनीम् ।
एकाम्रतपतिं नत्वा स्तुत्वा स्तोत्रैरनेकशः ॥ २५

विरिञ्चिपुरमासाद्य विरिञ्चाद्यैरभिष्टुता ।
पूजयित्वा यथाशास्त्रं अर्चयित्वा पुनः पुनः ॥ २६

ततोऽरुणाद्रिमासाद्य तत्र देवमुमापतिम् ।
पूजयित्वा महादेवं अवाङ्मनसगोचरम् ॥ २७

ततो वृद्धगिरिं प्राप्य तत्र देवं दयानिधिम् ।
अर्चयित्वा जगन्माता जगतामधिनायिका ॥ २८

शैवानां कर्मणां लोके पदं तत्चित्सभान्तरम् ।
संप्राप्य शिवगङ्गायां स्नात्वा शक्तिभिरावृता ॥ २९

गौरी रक्ताम्बरं धृत्वा भस्मोद्गलितविग्रहा ।
रुद्राक्षमणिसम्बद्धमुक्तामालविभूषिता ॥ ३०

स्थानेश्वरान् शुभाकारान् सुसेव्य समनुक्रमात् ।
पश्चाद्धेमसभां गत्वा नत्वा कैलासनायकम् ॥ ३१

पूजयित्वा यथान्यायं चिन्मयाविष्टचेतसा ।
तस्यां सभायां देवेशमानन्दनटनादरम् ॥ ३२

नानातूर्यान्तसिद्धान्तरहस्याद्ध्राकृतिं प्रभुम् ।
अनुज्ञाप्य जगन्नाथमानन्दाश्रुमुखाम्बुजा ॥ ३३

सर्वैश्च शक्तिसन्धैश्च सहैव जगदीश्वरी ।
ततो ब्रह्मपुरीं प्राप्य श्रीकालीस्थानमुत्तमम् ॥ ३४

रहस्यकालीं संसेव्य विमानस्था ततःपरम् ।
ददर्श च शुभं गौरी वैद्यनाथस्थलं महत् ॥ ३५

तप्तहेममयैः कान्तैर्गोपुरैः वृषलाञ्छनैः ।
प्राकारैर्मणिचित्रैश्च मण्डपैरपि मण्डितम् ॥ ३६

कल्पवृक्षसमाकीर्णं जातीमन्दारशोभितम् ।
नालिकेराम्रबिल्वाढ्यं मल्लिकामालतीयुतम् ॥ ३७

पनसैः पाटलैश्चूतैः पुन्नागैरपि शोभितम् ।
पुष्पितैः फलितैर्वृक्षैः संवृतं वकुलोन्नतम् ॥ ३८

कावेरीवायुगन्धाढ्यं कदलीसंवृतं शुभम् ।
सर्वाभिः शक्तिभिस्सेव्यं त्रिभिरावरणैर्युतम् ॥ ३९

पुण्यतीर्थास्पदं सिद्धैः मुनिसंघैस्तपश्चरैः ।
शैवागमज्ञैरखिलैः कामधेनुगणैर्वृतम् ॥ ४०

वैद्यनाथस्थलं वीक्ष्य रोमाञ्चिततनूरुहा ।
विमानादवरुह्येशं प्रणिपत्य पुनः पुनः ॥ ४१

पादचारेण सा देवी पद्माक्षी जगदीश्वरी ।
पुनर्नत्वा पुनर्नत्वा पुनर्नत्वा पुनः पुनः ॥ ४२

आनन्दाश्रुसमाविष्टनेत्रोत्पलसुशोभिता ।
मन्दं मन्दं समागम्य गौरी वेदपुरन्तथा ॥ ४३

प्राविशद्वैद्यनाथस्य चालयं करूणालयम् ।
ददर्श तत्र गोक्षीरनामकं तीर्थमद्भुतम् ॥ ४४

हंसकारण्डवाकीर्णं चक्रवाकगणैर्युतम् ।
तटसंरूढबिल्वालिच्छायामण्डलमण्डितम् ॥ ४५

अर्थतो नामतश्चापि गोक्षीरमति निर्मलम् ।
पङ्कजैरपि कल्हारैः कुमुदानां गणैरपि ॥ ४६

शैवालपङ्क्तिभिश्चापि झषानां मण्डलैरपि ।
आकीर्णा तदनुप्राप्य मणिसोपानमण्डितम् ॥ ४७

सर्वाभिः शक्तिभिस्साकं विशन्ति स्नानवाञ्छया ।
गङ्गाद्यास्सरितस्तस्मिन् सस्मार गिरिजा तदा ॥ ४८

गङ्गा च स्मृतिमात्रेण सर्वतीर्थैश्च संयुता ।
मूर्तिमद्भिस्सरिच्छ्रेष्ठैः सर्वपातकनाशकैः । ४९

नदैश्च सकलैस्साकं सखीभिर्नर्मदादिभिः ।
सहसा सहसा देव्याः पुरस्तादभवत्तदा ॥ ५०

सापि साक्षात्कृतां गङ्गां गोक्षीरजलमध्यगाम् ।
दृष्ट्वा स्तुत्वा च वैद्येशं नत्वा हृदि तदाम्बिकाम् ॥ ५१

स्नात्वा श्वेताम्बरं धृत्वा भस्मरुद्राक्षभूषिता ।
मुक्ता हारादिभिर्दिव्यैः प्रवालैरपि मण्डिता ॥ ५२

अङ्गुष्ठमालिकां हेमरञ्जितां सुमनोहराम् ।
धारयन्ती जपन्ती सा गौरी भाग्यप्रदायिनी ॥ ५३

शैवीं पञ्चाक्षरीं सम्यगष्टोत्तरसहस्रकम् ।
रत्नसिंहासनारूढे दिव्यतेजोमये शुभे ॥ ५८

लिङ्गे मरतके रम्ये दहरान्तस्थमीश्वरम् ।
ध्यात्वा सदाशिवं देवं चन्द्रार्धकृतशेखरम् ॥ ५५

नीलकण्ठं विरूपाक्षं आवाह्य विधिना तदा ।
अर्घ्यपाद्यादिभिस्सर्वैः मधुपर्कपुरस्सरैः ॥ ५६

पञ्चामृतैः पञ्चगव्यैरिक्षुसारैर्मनोहरैः ।
दधिक्षौद्रयुतक्षीरैः पनसाम्रफलैरपि ॥ ५७

नालिकेरोदकैः शुद्धैस्तैलैर्गन्धधूमचूर्णकैः ।
बिल्वोदकैर्गन्धसारैरमृतैरिन्दुसम्भवैः ॥ ५८

अभिषिच्य महादेवं शङ्खाद्भिर्मन्त्रपूर्वकम् ।
ततो दिव्याम्बरैर्यज्ञसूत्रैः सौवर्णकैरपि ॥ ५९

दिव्यगन्धैर्दिव्यमाल्यैर्दिव्यभूषणमण्डलैः ।
दिव्यैस्तिलाक्षतैश्चैव दिव्यबिल्वदलैरपि ॥ ६०

दिव्यहारलताभिश्च समलङ्कृत्य भक्तितः ।
धूपैर्दीपैश्च नैवेद्यैः षड्रसैः कदलीफलैः ॥ ६१

अपूपैः पायसैश्चैव प्रीणयित्वा महेश्वरम् ।
कर्पूरपरिमृष्टानि ताम्बूलमुकुलान्यपि ॥ ६२

विनिवेद्य तदा भक्त्या प्रदक्षिणमथाकरोत् ।
ततो गौरी नमस्कृत्य स्तुत्वा तूर्यं च वाङ्मयैः ॥ ६३

विमले दहराकाशे लिङ्गात् संयोज्य शङ्करम् ।
पूजां समाप्य विधिवत् शक्तिभिस्सह पार्वती ॥ ६४

देवालयं समागम्य गणादीन् परितोष्य च ।
तत्र श्रीगन्धकण्ठीं तां वैद्यनाथं च भक्तितः ॥ ६५

संसेव्य पञ्चगव्याद्यैः कदल्याम्रफलैरपि ।
नालिकेरोदकैः शुद्धैर्वस्त्रपूतैस्सुशीतलैः ॥ ६६

कावेरीपुष्करैः किञ्च गङ्गादिसरितां जलैः ।
तत्रत्यैस्सप्ततीर्थैश्च वैद्यनाथं महेश्वरम् ॥ ६७

कृष्णश्रीगन्धकण्ठीं तां अभिषिच्य च बालिकाम् ।
दिव्यैश्च चन्द्रसङ्काशैर्दुकूलैस्सुमनोहरैः ॥ ६८

दिव्योपवीताभरणैः गन्धैः पुष्पैर्मनोहरैः ।
धूपदीपैश्च नैवेद्यैः नानाविधरसायनैः ॥ ६९

कर्पूरचूर्णसंयुक्तैः पूगीफलसमन्वितैः ।
नागवल्लीदलैश्चैव ताम्बूलैः स्वर्णपुष्पकैः ॥ ७०

च्छत्रैश्च चामरैश्चैव दर्पणप्रमुखैरपि ।
नीराजनैर्मन्त्रपुष्पैः भिषगीशानमीश्वरम् ॥ ७१

कृष्णश्रीगन्धकण्ठीं तामेवमेवोपचारकैः ।
प्रीणयित्वा महादेवी सखीभिश्शक्तिभिस्सह ॥ ७२

भक्त्या परमया युक्ता प्रदक्षिणमथाकरोत् ।

ततो हिमाद्रेस्तनया प्रणम्य
सहस्रशो वाग्भिरनन्यसम्भवैः ।
श्रीवैद्यनाथं जगतां सवित्रीं
स्तोतुं समारब्धवता मुनीशाः ॥

इति श्रीशैवपुराणे कोटिरुद्रसंहितायां उत्कृष्टशिवक्षेत्रप्रकरणे
श्रीवैद्यनाथस्थानमाहात्म्ये पञ्चमोऽध्यायः ॥

## ॥ षष्ठोऽध्यायः ॥



अगस्त्यः —

गौरी कृताञ्जलिपुटा वैद्यनाथं दयानिधिम् ।
कृष्णा श्रीगन्धकण्ठी च तुष्टावैवं गिरीन्द्रजा ॥ १

ऋताय ते नमस्तुभ्यं सत्याय सततं नमः ।
पराय ब्रह्मणे तुभ्यं पुरुषाय नमो नमः ॥ २

कृष्णपिङ्गलनाम्ने ते नमस्तुभ्यं नमो नमः ।
किञ्चोर्ध्वरेतसे तुभ्यं विरूपाक्षाय ते नमः ॥ ३

विश्वरूपाय वै तुभ्यं श्रुतिरूपाय ते नमः ।
दिव्यलिङ्गस्वरूपाय दिव्यशक्तिमते नमः ॥ ४

गुणत्रयनिदानाय गुणातीताय ते नमः ।
भवरोगादिसक्तानां पुरुषाणां दिवौकसाम् ॥ ५

आतुरामयभीतानां विष्णोर्मदनरोगिणाम् ।
चिकित्सकाय क्षेत्रेऽस्मिन् प्राप्ताय रजताचलात् ॥ ६

मूर्तिमद्भिर्मन्त्रगणैर्महद्भिः कोटिभिस्सदा ।
उपास्याय नमस्तुभ्यं निर्गुणाय नमो नमः ॥ ७

श्रीरामसौमित्रिजटायुवेद

षडाननादित्य कुजार्चनाय ।

श्रीनीलकण्ठाय दयामयाय

श्री वैद्यनाथाय नमश्शिवाय ॥ ८

गङ्गाप्रवाहेन्दुजटाधराय

त्रिलोचनाय स्मरकालहन्त्रे ।

समस्तदेवैरपि पूजिताय

श्री वैद्यनाथाय नमःशिवाय ॥ ९

भक्तप्रियाय त्रिपुरान्तकाय

पिनाकिने दुष्टहराय नित्यम् ।

प्रत्यक्षलीलाय मनुष्यलोके

श्री वैद्यनाथाय नमःशिवाय ॥ १०

प्रभूतवातादिसमस्तरोग-

प्रणाशकर्त्रे मुनिवन्दिताय ।

प्रभाकरेन्द्वग्निविलोचनाय

श्री वैद्यनाथाय नमःशिवाय ॥ ११

वाक्श्रोत्रनेत्राङ्घ्रिविहीनजन्तोः

वाक्श्रोत्रनेत्राङ्घ्रिसुखप्रदाय ।

कुष्ठादिसर्वोन्नतरोगहन्त्रे

श्री वैद्यनाथाय नमःशिवाय ॥ १२

वेदान्तवेद्याय जगन्मयाय
योगीश्वराध्येय पदाम्बुजाय ।
आत्मस्वरूपाय शरीरभाजां
श्री वैद्यनाथाय नमःशिवाय ॥ १३

स्वतीर्थमृद्भस्मभृदङ्गभाजां
पिशाचदुःखार्तिभयापहाय ।
श्रीमूर्तिरूपाय सहस्रनाम्ने
श्री वैद्यनाथाय नमःशिवाय ॥ १४

श्रीनीलकण्ठाय वृषध्वजाय
स्रग्गन्धभस्माद्यभिशोभिताय ।
सुपुत्रदारादिसुभाग्यदाय
श्री वैद्यनाथाय नमःशिवाय ॥ १५

अणिमाद्यष्टसिद्धीनां धनधान्यादि नायक ।
निधिदानपटो शम्भो चतुःषष्टिकलाप्रद ॥ १६

कृपानिधे नमस्तुभ्यं जगद्रक्षणदीक्षितः ।
इति स्तुतो वैद्यनाथो वृषारूढो महेश्वरः ॥ १७

आविरासीत्तदा शम्भुः करुणावरुणालयः ।
तदानीं गिरिजा तुष्टा सानन्दाश्रुमुखाम्बुजा ॥ १८

प्रादुर्भूतं महादेवं दयासिन्धुं जगत्पतिम् ।
कृष्णश्रीगन्धकन्या च सहितं सुन्दराकृतिम् ॥ १९

त्रिणेत्रं शशिचूडालं कोटिमन्मथविग्रहम् ।
दधतं तपनं शूलं अभयं डमरुं तथा ॥ २०

लसदष्टमहानागभूषणोरस्कमव्ययम् ।
शक्तिभिर्विविधाभिश्च अप्सरोभिश्च वन्दितम् ॥ २१

गणाधिपेन स्कन्देन भद्रकाल्यादिभिर्वृतम् ।
शक्रादिभिर्लोकपालैरर्च्यमानपदाम्बुजम् ॥ २२

प्रपञ्चैर्वन्दितं कान्तं नीलकण्ठं वृषध्वजम् ।
वीजितं चामराभ्यां च भस्मरुद्राक्षमण्डितम् ॥ २३

तरुणं रूपसम्पन्नं वैद्यनाथं महेश्वरम् ।
गौरी वीक्ष्य तदानन्दं प्राप्य तस्य पदाम्बुजम् ॥ २४

अनमद्वैद्यनाथस्य भक्तियुक्ता मुनीश्वराः ।
गौरीं तां करपद्माभ्यामालिङ्ग्योद्धृत्य शङ्करीम् ॥ २५

वैद्यनाथोऽवदत्प्रीत्या गौरीमिति दयानिधिः ।
वृणु गौरि वरं तेऽद्य ददामि गिरिनन्दिनि ॥ २६

इत्युक्ता वैद्यनाथेन प्रीत्या चोत्थाय नायकम् ।
पप्रच्छ वैद्यनाथं तं वरं गौरी जगद्धितम् ॥ २७

गौरी–

वैद्यनाथ महादेव त्वयि भक्तिमचञ्चलाम् ।
देहि देवत्वया सार्द्धं वस्तुमिच्छामि सर्वदा ॥ २८

किं चास्ति मे दयासिन्धो याचनीयं ममाऽधुना ।
वैद्यनाथस्थले ये त्वां स्नात्वा गोक्षीरपुष्करे ॥ २९

हल्लकैः कुसुमैरन्यैः अर्चयन्ति विशेषतः ।
पुत्रपौत्रादिभिस्साद्धं भुक्त्वा भोगाननेकशः ॥ ३०

भवपाशविनिर्मुक्ताः त्वत्सायुज्यं लभन्तु ते ।
मया कृतमिदं स्तोत्रं अष्टसङ्ख्यासु पूरितम् ॥ ३१

ये पठन्ति नरा भक्त्या ते यान्तु परमां गतिम् ।
तथैवास्तु त्वया गौरि प्रार्थितान्यखिलान्यपि ॥ ३२

वैद्यनाथोऽपि सुप्रीतः पुनराहाम्बिकामिति ।
पुरा देवासुराणां च बभूव रणमम्बिके ॥ ३३

वर्षाणामयुतं भीममसुरास्तत्रहतास्सुरैः ।
भार्गवं शरणं प्राप्य क्षुद्रमार्गं ततोगमन् ॥ ३४

ततस्ते पुनरागम्य युद्धभूमिं सुरानिमान् ।
बाणाग्रे क्षुद्रमन्त्राणि प्रयुज्य क्षुद्ररोगिणः ॥ ३५

कृत्वाद्भुतं तदीयं च पदं प्राप्य मुदं ययुः ।
ततस्ते सुरसङ्घाश्च बलारिप्रमुखाः पुनः ॥ ३६

पदभ्रष्टाः खिन्नमुखा विहीनाश्शरणेन च ।
कुत्रापि शान्तिकर्तारं तस्य रोगस्य भूतले ॥ ३७

अलब्ध्वा चिन्तया युक्तास्त्वशरीरवचोऽमृतम् ।
पीत्वा श्रोत्रपुटाभ्यां तु तदाज्ञावशवर्तिनः ॥ ३८

दीना दिष्ट्या परं प्राप्ता शक्तिपीठमिमं प्रिये ।
ततोऽस्मदालयं प्राप्य मद्दर्शनकुतूहलात् ॥ ३९

मां दृष्ट्वा पूर्वपुण्येन शुभेन शुभमानसाः ।
कृष्णश्रीगन्धकण्ठ्या च सहितं विधिवत्तदा ॥ ४०

पूजयित्वाऽथ नत्वा च स्तुत्वा स्तुत्वा पुनः पुनः ।
प्रदक्षिणसहस्राणि क्षुद्ररोगार्तिशान्तये ॥ ४१

अकुर्वन् ते त्वतिक्लिष्टा भक्तितो मण्डलावधि ।
ततो मदाज्ञया देवा मत्प्रभावसमुद्भवे ॥ ४२

शक्तिगङ्गाभिधे तीर्थे दर्शनादिष्टदायके ।
गोक्षीरनाम्नि विधिवत् क्षीरसागरसन्निभे ॥ ४३

स्नात्वाऽऽचम्य ततः पीत्वा तत्रत्यानृषिसत्तमान् ।
गोभिरश्वैर्गजैर्दिव्यैर्धनधान्यादिभिः पुनः ॥ ४४

षड्रसैः सहितैरन्नैरपूपैः पायसैः पुनः ।
दिव्यैः फलैः कन्दमूलैर्दधिक्षीरादिभिस्तथा ॥ ४५

ताम्बूलैर्दक्षिणाभिश्च तोषयित्वा पुनः पुनः ।
ततो ब्राह्मणपूजाभिस्तृप्तं मां प्राप्य ते सुराः ॥ ४६

नत्वा स्तुत्वा पुनर्नत्वा नत्वा स्तुत्वा पुनः पुनः ।
क्षुद्ररोगाद्विनिर्मुक्ता दैत्यान् जित्वा मदाज्ञया ॥ ४७

स्वं स्वं पदं समापन्ना बभूवुस्सुखजीविनः ।
रोगार्तानां तु देवानां भेषजं कृतवान् यतः ॥ ४८

तदारभ्य तु मां देवि भिषगीशं वदन्ति हि ।
अतो देवि महाभागे सर्वलोकैक वन्दिते ॥ ४९

शक्तिगङ्गाभिधे तीर्थे ये स्नानमरुणोदये ।
कुर्वन्ति प्राणिनो भक्त्या ते यान्ति परमां गतिम् ॥ ५०

किं चैतन्मम माहात्म्यं ये शृण्वन्ति मुदान्विताः ।
सर्वरोगविनिर्मुक्तास्तेसर्वेमुक्तिमवाप्नुः ॥ ५१

ततो देवो महादेवश्चन्द्रार्धकृतशेखरः ।
प्रीत्या परमया युक्तस्तामालिङ्ग्य पुनः पुनः ॥ ५२

कृष्णश्रीगन्धकण्ठ्या संयोज्य जगतीपतिः ।
अर्द्धाङ्गे स्थापयित्वा तामर्द्धनारीश्वरोऽभवत् ॥ ५३

ततस्तां प्रत्युवाचेदं सर्वलोकमहेश्वरः ।
हे बाले जगतां वन्द्ये मम प्रियतरे शुभे ॥ ५४

अद्य प्रभृति त्वां देवि बालाम्बेति वदन्त्विह ।
सर्वे मन्त्राश्च मुनयस्सर्वे देवास्तथाऽसुराः ॥ ५५

किञ्च मां भिषगीशं त्वां स्कन्द कल्पगणेश्वरम् ।
गणनाथं च शास्तारं भद्रकालीं महेश्वरीम् ॥ ५६

एतानि सप्त तीर्थानि सर्वपापहराणि च ।
ये सेवन्ते नरा भक्त्या ब्राह्मणान् वेदपारगान् ॥ ५७

सर्वे रोगविनिर्मुक्तास्ते सर्वे मुक्तिमाप्नुयुः ।
इत्युक्त्वा देवदेवशास्तया साकं मुनीश्वराः ॥ ५८

वरांश्च सर्वजन्तूनां ददत्तत्र महेश्वरः ।
एतदाख्यानमव्यग्रमनन्तफलदं शुभम् ॥ ५९

ये शृण्वन्ति नरा भक्त्या शिवसायुज्यमाप्नुयुः ॥ ६०

श्रुत्वा तत् भिषगीश्वरस्य तुमुलं माहात्म्यमत्यादरा-
दानन्दाब्धिनिमज्जनान्तरमलं सर्वे मुनीन्द्रास्तथा ।
अन्यं श्रोतुमिदं मुनीन्द्रसहसा सन्नह्य तिष्ठन्त्यहो-
श्रोतॄणां निवहाः परन्तु भवतस्तस्माद्वदस्वाधुना ॥ ६१

इति श्रीशैवपुराणे कोटिरुद्रसंहितायां उत्कृष्टशिवक्षेत्रप्रकरणे
श्रीवैद्यनाथस्थानमाहात्म्ये षष्टोऽध्यायः ॥



## ॥ सप्तमोऽध्यायः ॥

अगस्त्य उवाच —

अन्यच्छृणुध्वं वक्ष्यामि वैद्यनाथस्य वैभवम् ।
शृण्वतां सर्वपापघ्नं भक्तियुक्ता मुनीश्वराः ॥ १

विधयः कोटयः पूर्वं अचिकित्साः चिकित्सकम् ।
आराध्य सकलान् कामान् प्रापुः शम्भोः प्रसादतः ॥ २

श्रीषण्णवतितत्त्वार्थमतीतस्त्रिगुणात्मकः ।
दक्षिणाङ्गाद्विधिं सृष्ट्वास्वस्मिन् धाम्न्यवसच्छिवम् ॥ ३

दशवर्षःसहस्राणि विधिश्चक्रे तपो महत् ।
तपसा तोषितः शम्भुः विधिं प्राहाम्बया सह ॥ ४

विधे ते तपसा दास्ये प्रीतोऽहं वरमादरात् ।
तवाभीष्टं वृणु ब्रह्मन् सर्वलोकहिताय वै ॥ ५

इत्युक्तश्शम्भुना ब्रह्मा वरं वव्रे सदाशिवम् ।
कृताञ्जलिपुटः शम्भुं प्राह गम्भीरया गिरा ॥ ६

जगन्नाथ महेशान नमस्ते भक्तवत्सल ।
जगतां सृष्टये देहि सामर्थ्यं परमेश्वरः ॥ ७

विधिना प्रार्थितः शम्भुरवदत् कमलासनम् ।
पुरं पूर्वपदंब्रह्मन् गृध्रऋक्स्कन्दभास्करान् ॥ ८

मनःप्रीतिकरं तत्र भारत्या सह गम्यताम् ।
वरं ददामि तत्रैव कैलासाचलसन्निभे ॥ ९

इत्युक्तः शम्भुना ब्रह्मा प्रणम्य परमेश्वरम् ।
कैलासान्निर्गतो देवैःस्तूयमानो मुनीश्वरः ॥ १०

हंसारूढः शिवक्षेत्राण्यालोकयदनेकशः ।
केदारेशं विश्वनाथं कालहस्तीशमव्ययम् ॥ ११

नत्वा स्तुत्वा महेशानं तत्र तत्र स्थलेषु च ।
ततो निर्गत्य सन्तुष्टो भारत्या सहितो विधिः ॥ १२

एकचूतपतिं नत्वा ततो व्याघ्रपुरं महत् ।
आगत्य पूजयित्वेशं निर्गतः कमलासनः ॥ १३

रहस्यकाशीं संसेव्य प्राप वद्येश्वरस्थलम् ।
प्रणम्य गणनाथादीन् गोक्षीराख्ये दृढव्रतः ॥ १४

तीर्थे स्नात्वोत्थितो भक्त्या धृत्वा वस्त्रं समाहितः ।
भस्मोद्धूलितसर्वाङ्गः त्रिपुण्ड्रांकितमस्तकः ॥ १५

सन्ध्यां समाप्य विधिवत् गायत्रींश्च षडक्षरम् ।
जप्त्वा देवालयं प्राप्य गणेशं स्कन्दमिष्टदम् ॥ १६

कृष्णश्रीगन्धकण्ठीं च संसेव्य तदनन्तरम् ।
अनादि वैद्यपीशानं प्राप्तवान् शरणं विधिः ॥ १७

सपर्यां विधिवत् कृत्वा बिल्वपत्रैस्तमर्चयत् ।
ततोऽस्तुवद्वैद्यनाथमभीष्टार्थप्रदायकम् ॥ १८

अनादिवैद्यदेवेश वत्र चिकित्साचिकित्सक ।
जटायुनाथ गौरीश नमस्ते नृत्तसुन्दर ॥ १९

कृष्णश्रीगन्धकण्ठीश बालिकापतये नमः ।
इति स्तुत्वा विरिञ्चिस्तं वैद्यनाथं दयानिधिम् ॥ २०

कृताञ्जलिपुटोऽतिष्ठत् सरस्वत्या मुदान्वितः ।
तस्य स्तोत्रेण सन्तुष्टः श्री वैद्येशकृपानिधिः ॥ २१

देव्या बालिकया सार्धं आविरासीद्विधेःपुरः ।
वरं वृणु सुभद्रं ते प्रीतोऽस्मि तव पूजनात् ॥ २२

इत्युक्तो भिषगीशेन वरं वव्रे जगद्धितम् ।

ब्रह्मा —

सामर्थ्यं जगतां सृष्टौ त्वं देहि जगतीपते ॥ २३

बिल्वैः कल्हारकुसुमैर्येऽर्चयन्ति महेश्वर ।
त्वत्पादाम्बुजयोर्भक्त्या पुमर्थांश्च लभन्तु ते ॥ २४

इति संप्रार्थितो धात्रा सृष्टौ सामर्थ्यमीश्वरः ।
दत्वा प्राह पुनः शम्भुः ब्रह्माणं मुनिसत्तमाः ॥ २५

मामर्चयन्ति ये भक्त्या बिल्वैः कल्हारपङ्कजैः ।
धर्मार्थकाममोक्षाश्च तेषां सन्तु मुनीश्वराः ॥ २६

एवं दत्वा विधेशशम्भुः वैद्यनाथःकृपानिधिः ।
कृष्णश्रीगन्धकण्ठया च सह सर्वार्थदायकः ॥ २७

कावेर्याश्चोत्तरे तीरे भिषगीशो विभात्यहो ।
वैद्यनाथाद्वरं प्राप्य भारत्या सह विश्वसृक् ॥ १८

हंसारूढः पुनः प्राप्य सत्यलोकं मुनीश्वराः ।
सृष्ट्वा लोकान् विरिंचोऽथ पञ्चास्यमदगर्वितः ॥ २९

सदृशोऽहं शङ्करस्य पञ्चास्यास्य महात्मनः ।
पीडयामास सर्वाणि जगन्ति विविधानि च ॥ ३०

तं दृष्ट्वा गर्वितं शम्भुः स्मित्वा किञ्चिन्महेश्वरः ।
तस्य तत्पञ्चममं कोपात् नखेन व्यलुनच्छिरः ॥ ३१

ततो वेदनया युक्तो गतोद्धतबलो विधिः ।
भिषगीशस्थलं प्राप्य पुनर्नमितगन्धरः ॥ ३२

गोक्षीरमज्जनं कृत्वा भिषगीशमपूजयत् ।
यथोक्तेन विधानेन बिल्वपत्रैस्समर्चयत् ॥ ३३

अथाविरासीद्वैद्येशो ब्रह्मणोऽग्रे दयानिधिः ।
तोषितोऽस्मि विरिञ्चाद्य वरं वृणु च सुव्रत ॥ ३४

अद्यप्रभृति लोके त्वां चतुर्मुखविधिं विदुः ।
इत्युक्तो वैद्यनाथेन वरं वव्रे ततो विधिः ॥ ३५

निर्वेदनोऽहं शम्भोऽत्र यष्टुमिच्छामि सांप्रतम् ।
आज्ञां कुरुत मे स्वामिन् त्वद्भक्तस्य कृपानिधे ॥ ३६

प्रार्थितो ब्रह्मणा शम्भुर्यजेति च तिरोदधे ।
अग्निभागे विरिञ्चोथ गङ्गां संस्मार पावनीम् ॥ ३७

कुण्डे प्रत्यक्षभूतोऽभूत् सापि गङ्गा सखीवृता ।
पुण्ये कुण्डेऽत्र गङ्गायां स्नात्वा ब्रह्मा अयजत्ततः ॥ ३८

अस्तुवत् स्तोत्रबृन्देन वैद्यनाथं महेश्वरम् ।
वैद्यनाथ महादेव मणिमन्त्रौषधेश्वर ॥ ३९

नमस्ते देवदेवेश भक्तवत्सल ते नमः ।
भिषगीशः स्तवेनास्य प्रादुर्भूतो महेश्वरः ॥ ४०

सुप्रसन्नोऽग्रहीद्देवो हविर्भागं विधेः करात् ।
ततो देवाश्च मुनयो हवींषिज्ञगृहुस्ततः ॥ ४१

ब्रह्माध्वरे समाप्ते तु सर्वे देवास्समागताः ।
नराश्च मुनयश्चैव सस्नुरावभृधे तदा ॥ ४१

पितरोऽपि च तं दृष्ट्वा गयास्नानाद्यथा तथा ।
तृप्तिं प्राप्ता महाभागा विस्मयं परमं ययुः ॥ ४३

ततस्समाप्य विधिवत् ब्रह्मा यज्ञं मुनीश्वरात् ।
अभ्यर्च्य ऋत्विजश्चैव दक्षिणाभिर्द्विजांस्तदा ॥ ४४

वैद्यनाथमनुज्ञाप्य तदा सन्तुष्टमानसः ।
सत्यलोकं जगामाशु हृदि ध्यात्वा सदाशिवम् ॥ ४५

अगस्त्यः —

वैद्यनाथस्थले तस्मात् गयाक्षेत्रसमं भुवि ।
तदारभ्य मुनिश्रेष्ठा गङ्गाकुण्डमिदं विदुः ॥ ४६

ब्रह्मकुण्डमिति ख्यातं ब्रह्महत्यादिपापहम् ।
दर्शनं ब्रह्मकुण्डस्य जलपानं च मुक्तिदम् ॥ ४७

त्रयस्त्रिंशत्कोटिगणैस्तीर्थैरासेवितोदके ।
ब्रह्मकुण्डे नरा स्नान्ति य तु भक्तिसमन्विताः ॥ ४८

तेषामष्टविधा सिद्धिः भवत्येव न संशयः ।
स्वर्णस्तेयी सुरापायी गुरुतल्पी च वीरहा ॥ ४९

भ्रूणहा वृषलीभुक्ता ब्रह्मकुण्डाभिषेचनात् ।
वैद्यनाथस्थले शुद्धो भवेत्तीर्थस्य वैभवात् ॥ ५०

ब्राह्मणः क्षत्रियो वापि वैश्यः शूद्रोऽन्य एव वा ।
वैद्यनाथस्थलं प्राप्य ब्रह्मकुण्डजले शुभे ॥ ५१

स्नात्वा नत्वा महादेवं पित्रोर्मृतदिनेऽपि वा ।
माघमासेऽथवा ऋक्षे माघाख्ये पितृदेवते ॥ ५२

यस्मिन् कस्मिंश्च दिवसे देवर्षिपितृतर्पणम् ।
किञ्च द्विजान् दक्षिणाभिस्तिलदानैर्यथाविधि ॥ ५३

यः करोति नरो भक्त्या तस्येदं फलमुच्यते ।
गयायां पिण्डदानेन प्रयागे पिण्डदानतः ॥ ५४

पिण्डदानेन रामेशे यथा मुक्तिस्तथा द्विजाः ।
ये शृण्वन्ति कथामेतां पुण्यामद्भुतवैभवाम् ॥ ५५

पठन्ति वाखिलान् कामान् प्राप्नुयुर्मुनिपुङ्गवाः ॥ ५६

इति श्रीशैवपुराणे कोटिरुद्रसंहितायामुत्कृष्टशिवक्षेत्रप्रकरणे श्रीवैद्यनाथस्थानमाहात्म्ये कमलासनपूजा नाम सप्तमोऽध्यायः ॥



# ॥ अष्टमोऽध्यायः ॥

अगस्त्य उवाच –

श्री वैद्यनाथाय नमः ॥

शृणुध्वं संप्रवक्ष्यामि वैद्यनाथस्य वैभवम् ।
शृण्वतां पठतां पुंसां सौभाग्यदमनुत्तमम् ॥ १

पुरा राथंतरे कल्पे त्वचिकित्साचिकित्सकम् ।
अपूजयत् कुजो भक्त्या तदद्य प्रब्रवीमि वः ॥ २

पादे हिमवतः शम्भुरूर्ध्वरेताः फलाप्तये ।
तपश्चकार पार्वत्याः केलियोगेच्छुरग्रतः ॥ ३

न्यस्ताक्षिरर्के स्वात्मीये स्वाध्यात्मज्ञानकौशलः ।
एवं तपति गौरीशे स्वेतबिन्दुरभून्मुखात् ॥ ४

पपाताङ्गाररूपोऽसौ प्रलयाग्निरिवापरः ।
भूमेरधो रक्तवर्णो ज्वालामाला प्रभायुतः ॥ ५

उष्णेन तेजसा तस्य स्वेतबिन्दोश्चचाल भूः ।
अस्तुवत्पारमेशानं वाक्यैरुपनिषद्भवैः ॥ ६

भूत्या स्तोत्रेण सन्तुष्टः कृपां शम्भुश्चकार वै ।
भूमिं समब्रवीद्देवो देवि विश्वम्भरे तव ॥ ७

स्तोत्रेण तोषितोऽहं ते वरं वृणु ददाम्यहम् ।
इत्युक्ता तेन देवेन धरणी प्राह शङ्करम् ॥ ८

स्वामिन् शम्भो महादेव स्त्वेतयिन्दुर्दहत्यलम् ।
रक्ष मां रक्ष मां देव पाहि मां पाहि मां प्रभो ॥ ९

भुवानुनीतश्शम्भुस्तां उवाच धरणीं शिवम् ।
विश्वम्भरे त्वं माभैषीः आर्तिं ते शमयाम्यहम् ॥ १०

एवमुक्ते महेशे तु रक्तवर्णे मुनीश्वराः ।
रक्ताम्बरधरः क्षोण्याः जातः शम्भोरनुग्रहात् ॥ ११

अङ्गारकः कुमारोऽसौ शम्भोः पादं ननाम च ।
ततस्तुष्टो महादेवः कुमारमवदत्तदा ॥ १२

क्रूरकर्मन् कुमार त्वं भूम्यास्सुखकरो भव ।
भौम तुष्टोऽस्मि भद्रं ते भविष्यति न संशयः ॥ १३

इदानीं गच्छ कावेर्याश्चोत्तरे योजनावधि ।
अस्ति क्षेत्रं महापुण्यं पूर्वाबोधेस्तु पश्चिमे ॥ १४

वैद्यनाथमिति ख्यातं मम स्थानमनुत्तमम् ।
तत्र गन्तुं समुद्युक्तो गच्छ वारणसीमितः ॥ १५

ततः केदारसंस्थं मां स्तुत्वा नत्वा ततः परम् ।
कालहस्तीश्वरं शम्भुं स्तुत्वा नत्वा ततः परम् ॥ १६

वृद्धाचलाग्रसंस्थं मां स्तुत्वा नत्वा ततः परम् ।
भौम गच्छ महत् क्षेत्रं सर्वपातकनाशनम् ॥ १७

त्रिपु लोकेषु विख्यातं परं ब्रह्मपुराभिधम् ।
श्रीकालीनगराख्यं च प्रसिद्धिमिह भूतले ॥ १८

रहस्यकाशीत्यत्यंतशोभनं शुभदायकम् ।
तस्मिन् कालीतिलवनात् चित्सभेशाज्ञयागता ॥ १९

श्रीकालिनगरे कार्यसिद्धिं प्राप्य ततश्चर ।
तस्मिन् क्षेत्रे महापुण्ये त्रयस्त्रिंशच्च कोटयः ॥ २०

सुराश्च मुनयो रुद्राः सर्वे द्वादशभास्कराः ।
सर्वाशशक्तिगणास्सर्वे गणनाथाश्चतुर्दश ॥ २१

पुण्यतीर्थानि सर्वाणि पुष्करादीनि भूमिगा ।
गङ्गाद्याः सरितस्सर्वाः श्रीकालीनगरे सदा ॥ २२

मामुपास्यैव तिष्ठन्ति महादेव मुमापतिम् ।
नौरूपे स्फाटिके रत्ने नवरत्नालये कुज ॥ २३

सहस्रमानहेमाभैरक्षैरत्यन्तराजिते ।
समुद्रैरावृतस्तत्र चतुर्भिः प्रलये पुरा ॥ २४

महादेव्या समाश्लिष्टस्सततं विहराम्यहम् ।
अष्टानां भैरवाणां च मूलभूतश्चिदात्मकः ॥ २५

अनन्तानन्दशक्तिश्च सदा मन्मूर्तिरुज्वलः ।
आपदुद्धारको भाति सर्वलोक वरप्रदः ॥ २६

आपदुद्धारकाः तस्मात् उदभून्मन्त्रशक्तयः ।
तस्मिन् क्षेत्रे महापुण्ये मन्त्रसिद्धिर्भवत्यलम् ॥ २७

तत्सेवया समस्तानां जन्तूनामचिरात् भुवि ।
अणिमाद्यष्टसिद्धिश्च भवत्येव न संशयः ॥ २८

श्वेतारण्यं महाक्षेत्रं श्रीकालीपुरमुत्तमम् ।
चिदम्बरं विदुर्लोके त्रिस्थानमिह विश्रुतम् ॥ २९

षट्षष्टिकोटितीर्थानि तत्रैव निवसन्ति च ।
दशानां ब्रह्मणां तत्र पूजयानन्दभागहम् ॥ ३०

षड्भिश्च ऋतुभिस्तत्र पूजितोऽस्मि यथाविधि ।
श्रीकालिनगरे तत्र शरजन्माख्यया सरः ॥ ३१

हेमपद्मयुतं भाति सर्वाभीष्टप्रदायकम् ।
ब्रह्मतीर्थमिति ख्यातं हेमपङ्कजभासुरम् ॥ ३२

तीर्थानामद्भुतं तीर्थं भासते तत्र भूमिज ।
तत्र स्नात्वा यथा वत्म उमापतिमनुत्तमम् ॥ ३३

आपदुद्धारकं देवं देवीं च स्थिरसुन्दरीम् ।
किञ्च ब्रह्मपुरीशानं रत्ननौकास्पदं शिवम् ॥ ३४

भद्रकालीं च संपूज्य ततो वेदपुरीं व्रज ।
श्रीकालिनगरस्यास्य नैर्ऋते घटिकाद्वये ॥ ३५

वैद्यनाथस्थलं दिव्यं अस्ति क्षेत्रं महत्तरम् ।
सर्वाभीष्टप्रदं दिव्यं कलिकल्मषनाशनम् ॥ ३६

तत्र गत्वा महीपुत्र नित्यानन्दकरं शुभम् ।
तत्रैव भासते तीर्थं गोक्षीरमिति विश्रुतम् ॥ ३७

यत्र स्नात्वा नरा यान्ति अचिरात् परमं गतिम् ।
तत्र स्नात्वा च पीत्वा च मां पूजय यथाविधि ॥ ३८

अहं प्रत्यक्षभूतस्मन् वरं दास्ये झटित्यहम् ।
इत्याज्ञप्तस्तदा भौमः शङ्करेण महात्मना ॥ ३९

प्रणम्य शतशस्तुत्वा वाक्यैरुपनिषद्भवैः ।
तदा मन्दं विनिर्गत्य शङ्करोक्तं यथात्मनः ॥ ४०

काश्यादीनि च सर्वाणि क्षेत्राण्यप्युत्तमानि च ।
संसेव्य नियमेनैव शङ्करोक्तिं स्मरन् सदा ॥ ४१

पुण्टरीकपुरं प्राप्य ततो ब्रह्मपुरीश्वरम् ।
प्राप्य नत्वा पुनस्तुत्वा ततो वेदपुरीं गतः ॥ ४२

ततस्तीर्थं महापुण्यं नाम्ना गोक्षीरसंज्ञकम् ।
संप्राप्य नियमेनैव तत्र स्नात्वा यथाविधि ॥ ४३

धृत्वा दूकूलममलं शुद्धयज्ञोपवीतवान् ।
भस्मोद्धूलितसर्वाङ्गस्त्रिपुण्ड्राङ्कितमस्तकः ॥ ४४

अद्राक्षीन्मनसा साम्बं रुद्राक्षकृतभूषणः ।
समाप्य निखिलं कर्म तत्रत्यानृषिसत्तमान् ॥ ४५

तोषयित्वा गवाद्यैश्च ततो गच्छन् गणाधिपम् ।
पूजयित्वा यथाशास्त्रं गजाननमुमासुतम् ॥ ४६

स्वामिन् कल्पकविघ्नेश कल्पयाशु शुभं मम ।
इति सम्प्रार्थ्य विघ्नेशं नत्वावरणादेवतान् ॥ ४७

ततो बालाम्बिकानाथं पूजयामास भूमिजः ।
अर्घ्यपाद्यादिकान् दत्वा यथाविधि यथाक्रमम् ॥ ४८

पञ्चामृतैः पञ्चगव्यैः कदल्या त्रिफलैरपि ।
लिकुचैः पनसैश्चैव पक्वैर्नारङ्गराशिभिः ॥ ४९

दधिक्षौद्रघृतक्षीरैरिक्षुसारैर्मनोहरैः ।
नालीकेरोदकैः शुद्धैस्तैलैर्गोधूमचूर्णकैः ॥ ५०

बिल्वोदकैर्गन्धसारैरमृतैरिन्दुसम्भवैः ।
शतरुद्रीयमन्त्रज्ञैर्ब्राह्मणैर्वेदपारगैः ॥ ५१

ऋषिभिस्समभिश्चान्यैरसंख्याकैर्मुनीश्वरैः ।
ब्रह्मज्ञैर्ब्रह्मनिष्ठैश्च सार्धं अङ्गारको महान् ॥ ५२

अभिषिच्य महादेवं शङ्खाद्भिर्मन्त्रपूर्वकम् ।
ततो रक्ताम्बरैर्यज्ञस्सूत्रस्सौवर्णकैरपि ॥ ५३

रक्तपुष्पैस्समभ्यर्च्य रक्तगन्धानुलेपनैः ।
अलङ्कृत्य महेशानं पद्मरागैर्विशेषतः ॥

कल्हारकुसुमैः किञ्च रक्तोत्पलगणैरपि ।
मुक्ताहारैर्महार्हैश्च भूषणैर्मकुटादिभिः ॥

आराधयन्मुदा भक्त्या अन्यैग्रहगणैस्सह ।
धूपैः कर्पूरदीपैश्च तोषयित्वा महेश्वरम् ॥

नैवेद्यं षड्रसोपेतं सर्षपान्नं सतैलकम् ।
आढकानां तिलानां च मुद्गानां सगुलान्नकम् ॥

दध्यन्नं पायसं चैव फलत्रयसमन्वितम् ।
शृङ्गिवेरेण संयुक्तं सर्वपात्रशलाटुकम् ॥

उपदंशशतैर्युक्तं अत्यद्भुतरसैर्युतम् ।
कारवल्लीफलं किञ्च वृन्ताकं च सवृन्तकम् ॥

एवं शाकशतश्चापि दिव्यगन्धसमन्वितैः ।
सद्यो घृतैर्गुलक्षीरैस्समण्डदधिमण्डलैः ॥

इक्षुसारैर्महासारैस्तथा मारीचसारकैः ।
माषापूपैर्गुलापूपैर्घृतभक्ष्यैर्मनोहरैः ॥

मधुगर्भैः शष्कुलीनां राशिभिर्वटकैस्तथा ।
सद्यश्चन्द्रसमुद्भूतैः अमृतैर्मधुरैरपि ॥

रसायनैश्च कापित्थैः और्वारुकफलानुगैः ।
पानकैर्मधुभिश्चैव सेचकैरुदकैस्तदा ॥ ६३

हेमपत्रस्थितैः किञ्च मणिपात्रस्थितैरपि ।
एवं रजतपात्रस्थैः अन्यैश्च रसवस्तुभिः ॥ ६४

आराधयित्वा देवेशममृतांशुकलाधरम् ।
आद्यन्तरहितं शम्भुमचिकित्साचिकित्सकम् ॥ ३५

कर्पूरशकलामृष्टदिव्यताम्बूलपूर्वकम् ।
नीराजनैर्मङ्गलैश्च दीपपङ्क्तिसहस्रकैः ॥ ६६

कर्पूरसम्भवैः किञ्च छत्रैश्चामरपङ्क्तिभिः ।
माणिक्यदर्पणैश्चैव तालवृन्तसहस्रकैः ॥ ६७

व्यजनैर्मणिक्लृप्तैश्च किञ्च चामरसम्भवैः ।
मन्त्रपुष्पैश्चतुर्वेदमन्त्रपूतैर्विशेषतः ॥ ६८

स्वर्णपुष्पसहस्रैश्च तथा माणिक्यपुष्पकैः ।
बिल्वपत्रार्चनाजालैश्शिवनामसहस्रकैः ॥ ६९

दिव्यनृत्तैर्दिव्यगीतैः दिव्यवाद्यैर्विशेषतः ।
तोषयित्वा महादेवं अम्बिकारमणं प्रभुम् ॥ ७०

प्रदक्षिणसहस्रैश्च नमस्कारशतैरपि ।
अङ्गप्रदक्षिणश्चैव तथा पदभवैरपि ॥ ७१

आनन्ददन्विरूपाक्षमानन्दभरनिर्भरम् ।
आदिदेवं महादेवं बालाम्बासहितं शिवम् ॥ ७२

अस्तुवद्वेदवेदान्तवचोगुम्भैः सहस्रशः ।
अथास्यात्यन्तभक्त्या च पूजया चार्चनाविधैः ॥ ७३

सन्तुष्टो भिषगीशानः करुणावरुणालयः ।
कृष्णाङ्गारचतुर्दश्यां नन्दिकेशपुरस्सरैः ॥ ७४

अनन्तैश्च गणैः किञ्च गणेशेन गुहेन च ।
बालाम्बया महादेव्या सर्वैर्देवैश्च वन्दितः ॥ ७५

वैद्यनाथः स्वयं लिङ्गाद्दिव्यतेजोमयादपि ।
प्रादर्भूत दयाम्भोधिर्वृषारूढो महेश्वरः ॥ ७६

ततः कुजो महातेजाः सानन्दाम्बुमुखाम्बुजः ।
ततो बालाम्बिकावामभागं सर्वेश्वरं प्रभुम् ॥ ७७

अद्राक्षीदद्भुताकारं रुद्राक्षकृतभूषणम् ।
नीलजीमूतसङ्काशकण्ठकान्तिविभूषितम् ॥ ७८

ललाटनयनज्वालाशलभीकृतमन्मथम् ।
फणीन्द्रभोगसम्बद्धजटामकुटमण्डितम् ॥ ७९

गण्डमण्डलपर्यन्तक्रीडन्मकरकुण्डलम् ।
भवदावानलज्वालापरितप्तजनादरम् ॥ ८०

गङ्गातुङ्गतरङ्गालिविलसन्मौलिमण्डलम् ।
सुधांशुरेखासम्बद्धचूडामणिसमन्वितम् ॥ ८१

व्याघ्रचर्मपरीधानं बिल्वमालाभिशोभितम् ।
हारायितशरत्कालतारागणसुशोभितम् ॥ ८२

नयनामृतपाथोधिसेतुबन्धसुनासिकम् ।
गङ्गात्रिपथगालीलापुण्ड्रेखाविराजितम् ॥ ८३

कोटिकन्दर्पसङ्काशं करुणामयविग्रहम् ।
कार्मुकीभूतकल्याणगिरीन्द्रकरपङ्कजम् ॥ ८४

बाणायितजगन्नाथं नारायणकराम्बुजम् ।
दयामृततरङ्गालिकरम्बितविलोचनम् ॥ ८५

कराग्रविलसद्रम्यमृगबालकशोभितम् ।
कराग्निकल्पितानल्पभक्तरक्षाग्निसाक्षिकम् ॥ ८६

प्रपञ्चभयसन्दानपरीक्षितकराम्बुजम् ।
पदानतजनानल्पवरदानविचक्षणम् ॥ ८७

वाचामगोचरीभूतमहिमानामुमापतिम् ।
पुङ्गवत्तुङ्गवपुषामधिरूढं सहोमया ॥ ८८

दृष्ट्वाऽऽनन्दमहाम्भोधिनिमग्नहृदयस्तदा ।
पपात दण्डवद्भूमौ भक्त्या परमया युतः ॥ ९८

गद्गदेन च कण्ठेन किञ्चिद्वक्तुमपारयन् ।
करुणाविग्रहेनाथनाथेन जगतां तदा ॥ ९०

किञ्चित्स्मितं कटाक्षेण वीक्षितस्स विचक्षणः ।
वक्तुं स्तोतुमसौ किञ्च सचेतनहृदम्बुचः ॥ ९१

उच्चैः कृताञ्जलिपुटस्तोतुमुद्युक्तमानसः ।
तुष्टाव परितुष्टात्मा स्पष्टरोमाञ्चकञ्चुकः ॥ ९२

रक्ष रक्ष महादेव दीनरक्षैकदीक्षित ।
त्राहि मां त्राहि मां शम्भो स्वामिन् त्वत्पदसेविनम् ॥ ९३

आद्यन्तरहितेशान वेदवेद्य जगत्पते ।
अनादिवैद्य सर्वज्ञ वैद्यनाथ नमोऽस्तु ते ॥ ९४

गङ्गाधर महादेव चन्द्रवह्न्यर्कलोचन ।
पिनाकपाणे विश्वेश वैद्यनाथ नमोऽस्तु ते ॥ ९५

वृषवाहन देवेश अचिकित्स्य चिकित्सकः ।
करुणाकर गौरीश वैद्यनाथ नमोऽस्तु ते ॥ ९६

विधिविष्णुमुखैर्देवैरर्च्यमानपदाम्बुजः ।
अप्रमेय हरेशान वैद्यनाथ नमोऽस्तु ते ॥ ९७

रामलक्ष्मणसूर्येन्दुजटायुःश्रुतिपूजित ।
मदनान्तक सर्वेशं वैद्यनाथ नमोऽस्तु ते ॥ ९८

प्रपञ्चभिषगीशान नीलकण्ठ महेश्वर ।
विश्वनाथ महादेव वैद्यनाथ नमोऽस्तु ते ॥ ९९

उमापते लोकनाथ मणिमन्त्रौषधेश्वर ।
दीनबन्धो दयासिन्धो वैद्यनाथ नमोऽस्तु ते ॥ १००

त्रिगुणातीत चिद्रूप तापत्रय विमोचन ।
विरूपाक्ष जगन्नाथ वैद्यनाथ नमोऽस्तु ते ॥ १०१

भूतप्रेतपिशाचादेरुच्चाटनविचक्षण ।
कुष्ठादिसर्वरोगाणां संहर्त्रे ते नमो नमः ॥ १०२

जात्यन्धपङ्गुरोगादेः दिव्यरूपप्रदायिने ।
अनेकमूकजन्तूनां दिव्यवाक्दायिने नमः ॥ १०३

इति स्तुतो वैद्यनाथो महादेवो दयानिधिः ।
प्राह गम्भीरया वाचा मन्दस्मितमुखाम्बुजः ॥ १०४

भौम हे वत्स दास्यामि वरं वृणु यथेप्सितम् ।
इति तत्सूक्तिपीयूषधाराभिरभिषेचितः ॥ १०५

भौमोऽपि स कृतार्थोऽस्मि कृतार्थोस्मीति चाब्रवीत् ।
वैद्यनाथ महादेव तव पदाम्बुजद्वये ॥ १०६

यथा मया त्वं लिङ्गेस्मिन् पूजितः परमेश्वर ।
तल्लेशलेशतो वापि भवन्तं पूजयन्ति ये ॥ १०७

तेऽभीष्टसिद्धिं संप्राप्य प्राप्नुवन्तु भवत्पदम् ।
मम वारे विशेषेण स्नात्वा सिद्धामृतोदके ॥ १०८

ब्राह्मणान् तोषयेद्भक्त्या शाल्यन्नैः षड्रसैर्युतैः ।
ताम्बूलैर्दक्षिणाभिश्च यस्तु भक्तिसमन्वितः ॥ १०९

तस्य रोगा विनश्यन्तु सर्वकामाः फलन्तु च ।
आयुरारोग्यमैश्वर्यं सम्भवेत्त्वत्प्रसादतः ॥ ११०

किञ्चाऽत्र भक्ति संयुक्ता मासेषु द्वादशेष्वपि ।
पुष्यमासे माघमासे फाल्गुने च विशेषतः ॥ १११

मम वारे महेशान स्नात्वा सिद्धामृतोदके ।
माहात्म्यं तावकं शम्भो श्रुत्वा भक्ति समन्वितः ॥ ११२

अभिषिच्य यथाशक्ति भवन्तं मन्त्रपूर्वकम् ।
तत्रत्यैर्ब्राह्मणैस्साकं शतरुद्रीयजापकैः ॥ ११३

पूजयित्वा यथाशास्त्रं सन्तर्प्य ब्राह्मणान् ततः ।
द्रव्यमन्नं फलं वृत्तं रक्तवस्त्रं च कम्बलम् ॥ ११४

दशदानानि यः कुर्यात् तस्याभीष्टप्रदो भव ।
तत्सर्वमक्षयं शम्भो त्वत्प्रसादाद्भवेदलम् ॥ ११५

इति संप्रार्थितो देवः कुजेन करुणानिधिः ।
अन्वग्रहीन्महादेवो भूपुत्राय महात्मने ॥ ११६

यद्यदत्र महाभाग भवता याचितोऽस्म्यहम् ।
तत्तत्सर्वं तथा भूयात् इत्युक्तो स दयानिधिः ॥ ११७

अद्यापि बालिकायुक्तः तस्मिन् क्षेत्रे गणैर्युतः ।
सर्वलोकैः पूज्यमानो विभाति मुनिपुङ्गवाः ॥ ११८

अङ्गारकः तथैवास्ते पूजयित्वा महेश्वरम् ।
तस्मादङ्गारवारं तु प्रसिद्धमिह भूतले ॥ ११९

इति श्रीशैवपुराणे कोटिरुद्रसंहितायां उत्कृष्टशिवक्षेत्रप्रकरणे श्रीवैद्यनाथस्थानमाहात्म्ये अङ्गारकपूजा नाम अष्टमोऽध्यायः ॥

## ॥ नवमोऽध्यायः ॥

**अगस्त्य उवाच —**

भूयो वक्ष्यामि माहात्म्यं वैद्यनाथस्य शूलिनः ।
शृण्वतां पठतां पुंसां भवेयुः संपदोऽखिलाः ॥ १

सम्पातिश्च जटायुश्च परस्परजिगीषया ।
उच्चेलतुर्नभोमार्गे त्वहंपूर्विकया पुनः ॥ २

तावुभौ मण्डलं भानोर्गत्वा तस्यांशुमण्डलैः ।
प्लुष्टपक्षौ विसंज्ञौ च पेततुर्धरणीतले ॥ ३

संपातिस्तु तयोर्मध्ये विन्ध्यपर्वतमाप्तवान् ।
जटायुर्वैद्यनाथाख्ये पुण्यक्षेत्रेऽतिभासुरे ॥ ४

मणिमन्त्रौषधाख्ये तु कुण्डे सर्वार्थसिद्धिदे ।
पतन् तस्य च माहात्म्यवैभवाद्विहगाधिपः ॥ ५

सपक्षस्सबलो भूत्वा लब्धसंज्ञः क्रमेण सः ।
चक्षुरुन्मील्य तेजस्वी दृष्ट्वा लिङ्गं तदद्भुतम् ॥ ६

स्नात्वा गोक्षीरतीर्थेऽस्मिन् अचिकित्साचिकित्सकम् ।
भिषगीशं समाराध्य पूर्णपक्षोऽभवद्द्विजाः ॥ ७

तस्मिन् काले रावणोऽसौ सीतामपहरच्छुभाम् ।
सीतापहारिणं क्रूरं प्राप्तं वैद्येश्वरस्थलम् ॥ ८

राक्षसेन्द्रं जटायुस्तं दृष्ट्वा स्यन्दनगामिनम् ।
श्रुत्वा च रक्ष रक्षेति वाचं कस्याश्चिदद्भुताम् ॥ ९

तत्रैव स्यन्दने सीतां प्रलपन्तीमनाथवत् ।
दृष्ट्वा युद्धाय सन्नद्धः सम्बभूव विहङ्गमः ॥ १०

ततो युद्धा महावीर्यः पौलस्त्येन दुरात्मना ।
जटायुः च्छिन्नपक्षस्सन् प्राणमुक्तस्तदा स्थितः ॥ ११

जित्वा गृध्रं रावणोऽपि सीतामादायमैथिलीम् ।
रामेति लक्ष्मणेत्येवं प्रलपन्तीं पतिव्रताम् ॥ १२

अशोकवनिकामध्ये स्थापयामास राक्षसः ।
मारीचं राघवो हत्वा प्राप वैद्येश्वरस्थलम् ॥ १३

स लक्ष्मणाय रामाय जटायुर्मुनिपुङ्गवाः ।
सीतावृत्तान्तमावेद्य गृध्रः प्राणान् तदाजहौ ॥ १४

रामश्च लक्ष्मणश्चोभौ दग्ध्वा गृध्रं जटायुषम् ।
स्नात्वा सिद्धामृते भक्त्या संपूज्य भिषगीश्वरम् ॥ १५

प्रापयित्वा पदं शैवं जटायुषमरिन्दमम् ।
आज्ञया भिषगीशस्य जित्वा रावणमाहवे ॥ १६

प्राप्य सीतामयोध्यां च गत्वा राज्येऽभिषेचितः ।
पालयित्वाऽखिलां पृथ्वीं अन्यैश्च भ्रातृभिस्सह ॥ १७

त्रिसहस्रं हायनानां राज्यं कृत्वा ततः परम् ।
सह सौमित्रिणा रामः पुनरायान्महाबलः ॥ १८

वैद्यनाथस्थलं रम्यं प्राप्य मन्नामतीर्थके ।
स्नात्वा रम्ये ब्रह्मकुण्डे स्नात्वा कृत्वाऽखिलाः क्रियाः ॥ १९

पश्चाद्रामो धनुष्कोटिं नैरृत्यां दिशि संस्थिताम् ।
गत्वा सन्नियमैर्युक्तः सर्वपापप्रणाशिनीम् ॥ २०

तत्र गङ्गां समावाह्य स्नात्वा भक्तियुतस्तथा ।
ततो देवालयं प्राप्य स्नात्वा सिद्धामृतोदके ॥ २१

नित्यकर्म समाप्याथ तत्रत्यान् द्विजसत्तमान् ।
दक्षिणाभिः तोषयित्वा श्रुत्वा तत्स्थलवैभवम् ॥ २२

कल्पकाख्यं गणपतिं गुहं बालाम्बिकामपि ।
भिषगीशं च सम्पूज्य चतुःषष्ट्युपचारकैः ॥ २३

सौगन्धिकैर्बिल्वपत्रैः नानाविधसुमैरपि ।
अभ्यर्च्य स्तोत्रबृन्देन वैद्यनाथमतोषयत् ॥ २४

ततो मुदान्वितो रामो वैद्यनाथस्य भक्तितः ।
उत्सवं कारयामास माघमासे समाहितः ॥ २५

नवध्वजसमायुक्तं नवकुण्डसमन्वितम् ।
कल्पयित्वा ध्वजारोहं महोत्सवमचालयत् ॥ २६

हेमध्वजैः पताकाभिः रम्भाभिर्वीथिकाः शुभाः ।
पूर्णकुम्भैरलङ्कृत्य दीपालीभिर्मनोहरैः ॥ २७

शङ्खभेरीमृदङ्गैश्च काहलाद्यैर्महेशितुः ।
सन्तोषं कारयामास वीणागानैश्च शोभनैः ॥ २८

दिव्याङ्गनानृत्तगीतैः भिषगीशमुपाचरत् ।
ईशाननायकं देवं दिव्याङ्गनविलोचनम् ॥ २९

वृषादिवाहने स्थाप्य दिव्यवस्त्रैरलङ्कृतम् ।
रत्नमाणिक्यवैडूर्यदामभिस्तमलङ्कृतम् ॥ ३०

वीथिकासु च रम्यासु चालयित्वा महेश्वरम् ।
नीराजनविधिं कृत्वा गोपुरद्वारसीम्नि स्थलम् ॥ ३१

ईशाननाथं संस्थाप्य मणिमण्डपिकान्तरे ।
आज्यक्षीरयुतैरन्नैरपूपैर्घृतपाचितैः ॥ ३२

पनसानां फलैस्सूपैः इक्षुखण्डैर्महेश्वरम् ।
तोषयित्वा वैद्यनाथं रथोत्सवमकारयत् ॥ ३३

अमायां माघमासान्ते कावेर्याः तीर्थवैभवम् ।
अस्तुवद्वैद्यनाथं च सिद्धिदं वैरविग्रहम् ॥ ३४

कृष्णश्रीकण्ठकण्ठीश नमो गौरीपते शिव ।
नृत्तसुन्दर शम्भो ते नमस्ते भक्तवत्सल ॥ ३५

नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं दयानिधे ।
इति स्तुतो वैद्यनाथो राममाहेति शङ्करः ॥ ३६

राम! अनेनोत्सवेनाहं तोषितोऽस्मि सहस्रशः ।
वरं वृणु ददाम्यद्य सन्तुष्टो रघुनन्दन ॥ ३७

भिषगीशेनैवमुक्तो वरं वव्रे रघूद्वहः ।
वैद्यनाथ त्वयि मम भक्तिरस्त्वचला सदा ॥ ३८

मयाऽऽराधित एतस्मिन् नवलिङ्गे महेश्वर ।
भक्त्याभिषेचनं यस्तु तस्य कामान् प्रपूरय ॥ ३९

ईशाननायकं देवीं दिव्याञ्जन विलोचनाम् ।
यः प्रीणयत्युत्सवेन तस्य शत्रून् विनाशय ॥ ४०

ददस्व राज्यलक्ष्मीं च दीर्घमायुर्यशो बलम् ।
इत्येवं प्रार्थितः शम्भुः वैद्यनाथोऽवदद्विभुः ॥ ४१

राम त्वया प्रार्थितं यत् तदस्तु मदनुग्रहात् ।
मदुत्सवे माघमासे स्नात्वा सिद्धामृते च माम् ॥ ४२

ये दर्शयन्ति भक्त्या वै पुत्रदारादिभिस्सह ।
कामान् भुञ्जन्तु देहान्ते मत्सायुज्यं लभन्तु ते ॥ ४३

इति दत्वा वरं शम्भुः रामस्य भिषगीश्वरः ।
अद्यापि भाति सर्वेषां सर्वाभीष्टप्रदायकः ॥ ४४

भिषगीशाद्वरं प्राप्य रामोऽपि तदनुज्ञया ।
गृध्रऋक्स्कन्दनगरादयोध्यां प्राप राघवः ॥ ४५

अपालयज्जगत्सर्वं वसिष्ठानुमते स्थितः ।
नारायणोऽपि संपूज्य वैद्यनाथं महेश्वरम् ॥ ४६

सामर्थ्यं लोकरक्षायां प्राप्तवानत्र हे द्विजाः ।
चन्द्रः शम्भुं समाराध्य वैद्यनाथं महेश्वरम् ॥ ४७

ताराणामधिपो भूत्वा विभाति मुनिपुङ्गवाः ।
दक्षप्रजापतेरासीत् कन्या कमललोचना ॥ ४८

अदितिर्नाम तां वेधा उपयेमे विधानतः ।
काश्यपस्स मुदा रेमे आदित्या सह भार्यया ॥ ४९

तस्यां समभवत् सूर्यः सर्वदेवमयः पुरा ।
त्वष्टा तस्मै उषां कन्यां अर्यम्णे प्रददौ सुताम् ॥ ५०

रराम उषया प्रीतो जायया सवितोन्मदः ।
सूर्यस्य तेजसा त्वष्टुः प्लुष्टदेहा सुता तदा ॥ ५१

त्वष्टे निवेदयामास तद्वृत्तान्तं यथातथम् ।
त्वष्टा वाक्यं कन्यकायां रुग्णा या श्रुतवान्नुषा ॥ ५२

सहस्रकिरणं शाणे समारोप्य महाप्रभम् ।
उल्लिलेख भृशं त्वष्टा त्वष्टुरूल्लेखनाद्रविः ॥ ५४

तान्तो रुग्णो नष्टचेताः प्राप्य वैद्येश्वरस्थलम् ।
वैद्यनाथं समराध्य रोगान्मुक्तो महाद्युतिः ॥ ५४

किञ्चाश्विजे माघमासे दिनत्रयसपर्यया ।
वर्षपूजासमुद्भूतफलं लेभे महेश्वरात् ॥ ५५

मदाबलो महावीर्यो लोकान् सर्वान् प्रभासयत् ।
तदारभ्य स्थलमिदं विदुस्सूर्यपुरं बुधाः ॥ ५६

अगस्त्यः —

सोमको नाम वेदाश्च हृत्वा पातालमभ्यगात् ।
देवाश्शिवं महादेवं ध्यायन्तस्तुष्टुवुस्सदा ॥ ५७

शिवस्याज्ञां पुरस्कृत्य विष्णुर्मत्स्याकृतिः खलम् ।
हत्वोद्धृत्य यथापूर्वं स्थापयामास ताः श्रुतिः ॥ ५८

वेदा वैद्येश्वरस्थानं प्राप्य सम्पूज्य शूलिनम् ।
यथोक्तेन विधानेन वाक्यैरुपनिषद्भवैः ॥ ५९

अस्तुवन्वैद्यनाथं तं स्तोत्रैः सन्तुष्टमानसः ।
प्रादुर्भूतो महेशानः चन्द्रार्धकृतशेखरः ॥ ६०

वरं वृणुत भद्रं वो भविष्यति न संशयः ।
इत्युक्तो वैद्यनाथेन वरं वव्रुर्महेश्वरम् ॥

वेदाः —

वैद्यनाथ महादेव त्वयि भक्तिमचञ्चलाम् ।
अस्माकं देहि किञ्चास्ति विवक्षा परमेश्वर ॥ ६२

एतस्य स्थलवर्यस्य मदीयं नामकं कुरु ।
इति तेषां वचः श्रुत्वा प्रत्युवाच महेश्वरः ॥ ६३

युष्माभिः प्रार्थितं यद्यत्तत्तथैव न संशयः ।
इति तेषां वरं शंभुः दत्वा तु भिषगीश्वरः ॥ ६४

सह बालिकया देव्या विभाति मुनिपुङ्गवाः ।
बाहुलेयस्तु सम्पूज्य भिषगीशं पुरा द्विजाः ॥ ६५

तदाज्ञया महावीर्यं महाबलपराक्रमम् ।
तारकं रणभूमौ तं जित्वा सेनापतिर्बभौ ॥ ६६

तदारभ्य स्थलमिदं विदुस्कन्दपुरं बुधाः ।
सुन्दरश्चोलदेशस्थः संपूज्य भिषगीश्वरम् ॥ ६७

रोगान्मुक्तश्च पापघ्ने वैद्यनाथस्थले द्विजाः ।
एका गौर्भिषगीशानं स्वकीयपयसा शिवम् ॥ ६८

संपूज्य कामधुक् जाता तन्निर्माल्यमयं शुभम् ।
तदारभ्य कृतं तीर्थं गोक्षीरमिति विश्रुतम् ॥ ६९

इक्षुसारमयं तीर्थं अभूद्भक्तस्य कस्यचित् ।
शिवप्रसादात्तद्दृष्ट्वा स भक्तो विस्मयं गतः ॥ ७०

हिरण्यवर्मणे राज्ञे स गत्वा तन्न्यवेदयत् ।
इक्षुसारमयं तीर्थमभूदद्य महाप्रभो ॥ ७१

श्रुत्वा हिरण्यवर्माऽथ तत्परीक्षार्थमागतः ।
सोऽवतार्य सरस्यस्मिन् परीक्षां कृतवान् तथा ॥ ७२

ततः परीक्षाकाले तु तदिक्षुरसतां गतम् ।
अतस्तदिक्षुसारं तत्तीर्थं सर्वत्र विश्रुतम् ॥ ७३

जटायुषा चिरं स्नातं तन्नाम्ना पप्रथे भुवि ।
जटायुतीर्थमित्येतत् पवित्रं पापनाशनम् ॥ ७४

तदारभ्य स्थलमिदं गृध्रेशनगराभिधम् ।
स्वर्गादमृतमानीय सिद्धास्समुनयः पुरा ॥ ७५

विनिवेद्य महाभागो वैद्यनाथाय शम्भवे ।
इदानीं पूजयन्ती स्म कालप्रच्छन्नरूपिणः ॥ ७६

तीर्थेऽस्मिन् प्रक्षिपद्देवोऽप्यमृतं प्रीतिमान् तदा ।
तस्मात्सिद्धामृतमिति तीर्थं तद्भुवि विश्रुतम् ॥ ७७

तस्मिन्नर्जुननामा च कश्चिद्भक्तो महामतिः ।
दत्वा सुतां तु देवाय वैद्यनाथाय शम्भवे ॥ ७८

अनन्यसुलभां काञ्चित् प्राप्तवान् गतिमद्भुताम् ।
वैद्यनाथं शतानन्दस्सम्पूज्य वरमाप सः ॥ ७९

शतानन्दमुनेश्शापात् दर्दुराः श्यामरूपिणः ।
तस्मिन् सिद्धामृतेऽद्यापि न दृश्यन्ते मुनीश्वराः ॥ ८०

ताभ्यां च भेकतीर्थं तत् प्रसिद्धमिह भूतले ।
नारदश्च भरद्वाजस्सुसंपूज्य महेश्वरम् ॥ ८१

वैद्यनाथस्थले स्नातां सर्वज्ञा मुनिपुङ्गवाः ।
किन्नरा धरणीपाला विद्याधरमहर्षयः ॥ ८२

वैद्यनाथं समाराध्य सर्वान् कामान् प्रपेदिरे ।
वैद्यनाथस्थले देवाः कोदण्डतटिनीजले ॥ ८३

स्नात्वाऽमरत्वं संप्राप्तां सत्यं सत्यं मुनीश्वराः ।
कोदण्डतटिनी लोके रामतीर्थमिति श्रुतम् ॥ ८४

वैद्यनाथस्थले पुण्ये श्रीरामतटिनीजले ।
पूष्णि मेषं गते सोमवारयुक्तपुनर्वसौ ॥ ८५

सर्वपापहरे रम्ये श्रीरामनवमीदिने ।
षष्टिकोटिसहस्राणि षष्टिकोटिशतानि च ॥ ८६

तीर्थानि कुर्वते वासं तत्र वै स्नानमात्रतः ।
सप्तजन्मार्जितं घोरं पातकादि विनश्यति ॥ ८७

यः इदं शृणुयान्नित्यं पठेद्वा सुसमाहितः ।
भवरोग विनिर्मुक्तस्स याति परमं पदम् ॥ ८८

इति श्रीशैवपुराणे कोटिरुद्रसंहितायामुत्कृष्टशिवक्षेत्रप्रकरणे श्रीवैद्यनाथस्थलमाहात्म्ये अखिलदेवपूजनं नाम नवमोऽध्यायः ॥

## ॥ दशमोऽध्यायः ॥

अगस्त्यः —

शृणुध्वं मुनयस्सर्वे भिषगीशस्य वैभवम् ।
यस्य श्रवणमात्रेण नरः पापात् प्रमुच्यते ॥ १

सिद्धाः पुरा द्वापरान्ते गन्धर्वैरमरैस्सह ।
किन्नरैरेत्य हेमाद्रिमस्तुवन् परमेश्वरम् ॥ २

ततः प्रसन्नो भगवान् सिद्धानामभवन् पुरः ।
ततस्तानब्रवीच्छम्भुः कृपया परमेश्वरः ॥ ३

सिद्धाः ! किमिह संप्राप्ताः कुशलं नास्ति वोऽधुना ।
लक्ष्यन्ते खिन्नवदनाः यूयं वदत चापदम् ॥ ४

इत्युक्तास्ते महेशेन सिद्धाः शम्भुं समब्रुवन् ।

सिद्धाः —

देवदेव महादेव परमेश्वर ते नमः ॥ ५

आसन्नः कलिरस्माकं भीतिस्सञ्जायतेऽधुना ।
चतुर्गुणाः कृते धर्माः त्रेतायां त्रिगुणाश्शिव ॥ ६

द्वापरे द्विगुणाः प्रोक्ताः कलावेकगुणस्मृतः ।
कलौ प्राप्ते द्विजास्सर्वे नित्यकर्माण्यवरानपि ॥ ७

नादरिष्यन्ति भूपालैर्भविष्यन्ति च बाधिताः ।
ब्राह्मणाश्च महात्मानो लोके धर्मपराङ्मुखाः ॥ ८

कृते मेरुसमं स्वर्णं ददतां श्रोत्रियाय यत् ।
नराणां फलमुक्तं हि त्रेतायां तु तदर्धकम् ॥ ९

तदर्धं द्वापरे प्रोक्तमिति नो निश्चिता मतिः ।
कलौ सर्षपमात्रं यत् स्वर्णं विप्राय दीयते ॥ १०

तदेव मेरुदानेन तुल्यमेव भवेद्ध्रुवम् ।
कामकच्छपनिविडे परस्त्रीशफरीयुते ॥ ११

कल्यब्धौ पततां नृणां उद्धर्ता त्वं हि शङ्कर ।
ततः कलिमलासक्तान् जनानस्मानवेश्वर ॥ १२

इति सिद्धैस्सुसंस्पृष्टः सिद्धानाह महेश्वरः ।
सिद्धाः शृणुध्वं युष्माकं हिताय जगतामपि ॥ १३

वैद्यनाथस्थलमिति सिद्धिक्षेत्रं धरातले ।
भासते कलिजुष्टानां जनानां हितकारणम् ॥ १४

यूयं गच्छत तत्रैव वरं दास्ये झटित्यहम् ।
इत्युक्तास्ते महेशेन मेरोस्सिद्धासुरैस्सह ॥ १५

सदाशिवाज्ञयाश्लप्नैः नभोमार्गेण निर्गताः ।
वैद्यनाथस्थलं प्राप्य गृध्रतीर्थतटं गताः ॥ १६

वैद्यनाथस्य पूजार्थमभिषेक्तुं समुद्यताः ।
कलिपापहरां गङ्गां सिद्धास्तुष्टुवुरादरात् ॥ १७

गङ्गे नमस्ते देवेशि कलिकल्मषनाशिनि ।
आपन्नार्तिहरे मातर्देवि तुभ्यं नमो नमः ॥ १८

सिद्धैस्स्तुता तदा गङ्गा वैद्यनाथस्थले शुभे ।
पुण्ये जटायुतीर्थे तु द्वापरान्ते मुनीश्वराः ॥ १९

आविरासीन्मुदा स्वाभिस्सखीभिस्सह सा नदी ।
तत्र प्रत्यक्षभूतास्ताः प्रवक्ष्यामि सुमाहिताः ॥ २०

यमुना नर्मदा गोदा बाहुदा सिन्धुरेव च ।
देविका सरयुः पुण्या चन्द्रभागा च गोमती ॥ २१

भद्रा क्षीरनदी तुङ्गा कृष्णा स्कन्दनदी तदा ।
गुञ्जा वेगवती शोणा कृष्णभद्रा च गोनदी ॥ २२

मणिमुक्ता ताम्रपर्णी कावेरी सरिदद्भुता ।
देवाद्भुतं पुष्करञ्च सूर्यपुष्करणी तदा ॥ २३

विधुपुष्करणी पुण्या स्वर्णपुष्करिणी द्विजाः ।
अच्छोदं मानसं चैव ब्रह्माण्डान्तर्गतानि च ॥ २४

एवमादि नदीभिश्च तीर्थैरन्यैश्च पुष्करैः ।
सहसा सहसा देवी स्वगङ्गा पापनाशिनी ॥ २५

माघमासे विशेषेण पञ्चम्यामिन्दुवासरे ।
गृध्रतीर्थे पुरस्तेषां सिद्धानामभवत्तदा ॥ २६

प्रादुर्भूतां समुद्वीक्ष्य सिद्धास्सह सुरैरपि ।
जटायुतीर्थे ते स्नात्वा नाम्ना गोक्षीरसंज्ञके ॥ २७

कृष्णश्रीगन्धकण्ठीं तां वैद्यनाथं महेश्वरम् ।
इत्यस्तुवन्महादेवं भक्त्याऽभीष्टप्रदायकम् ॥ २८

सिद्धाः -

वेदवेद्य कृपाधार जगन्मूर्ते शुभप्रद ।
अनादिर्वैद्यसर्वज्ञ नमस्ते भक्तवत्सल ॥ २९

सर्वलोकमहेशान कलिपापप्रणाशन ।
त्रिगुणाकार चिद्रूप ज्ञानदायक ते नमः ॥ ३०

क्षुद्रपीडावृतां नृणां कलौ त्वत्सेविनां शिव ।
समस्तरोगसंहर्त्रे भवरोगहराय च ॥ ३१

नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं दयानिधे ।
स्तोत्रेणानेन सुप्रीतो वैद्यनाथो महेश्वरः ॥ ३२

साक्षाद्भूतो महेशानः सिद्धान् प्राह दयानिधिः ।
वृणुध्वं सकलान् कामान् प्रदास्यामि सुरेश्वराः ॥ ३३

इत्युक्ताः भिषगीशेन वरं वव्रुर्जगद्धितम् ।
जटाय्वाख्यस्य तीर्थस्य मदीयं नामकं कुरु ॥ ३४

शुभे सिद्धामृते पुण्ये ये कुर्वन्ति निमज्जनम् ।
सर्वपापैः प्रमुच्येरन् सर्वान् कामान् लभन्तु ते ॥ ३५

भक्तवत्सल गौरीश ये त्वामत्र भजन्ति वै ।
कलिबाधा विनिर्मुक्ताः भवरोगविवर्जिताः ॥ ३६

पुत्रैः पौत्रैः परिवृताः सर्वान् कामान् च प्राप्य च ।
अन्ते स्वपितृभिस्सार्द्धं त्वत्पादाब्जमवाप्नुयुः ॥ ३७

इति सम्प्रार्थितो देवो वैद्यनाथो महेश्वरः ।
सिद्धानां बालया सार्धं देवानां प्रददावसौ ॥ ३८

युष्माभिः प्रार्थितं यद्यत् सिद्धास्सर्वं तथास्त्विति ।
अस्मदीयपुरे पुण्ये शुभे सिद्धामृते कलौ ॥ ३९

कदाचित् स्नान्ति ये तेषां सर्वाभीष्टं ददाम्यहम् ।
पुण्यमासे मदीयेऽस्मिन् भिषगीशस्थले नराः ॥ ४०

अङ्गारवारे स्नात्वा मां उत्सवे वा यदा कदा ।
भजन्ति तेषामारोग्यं पुत्रसम्पत् भवेन्नृणाम् ॥ ४१

कृष्णश्रीगन्धकण्ठया च सार्धं नित्यं वसाम्यहम् ।
इति दत्वा वरान् शम्भुः वैद्यनाथो दयानिधिः ॥ ४२

तिरोदधे महादेवो भक्तानामिष्टदायकः ।
वैद्यनाथाद्वरं प्राप्य सिद्धास्सर्वे सुरैस्सह ॥ ४३

कलौ प्रच्छन्नरूपास्ते भिषगीशमुमापतिम् ।
आराध्य सकलान् कामान् लेभिरे मुनिपुङ्गवाः ॥ ४४

अगस्त्यः –

वैद्यनाथस्थले पुण्ये तस्मिन् सिद्धामृते नराः ॥ ४५

यस्मिकस्मिंश्चिद्दिवसे चन्द्रसूर्योपरागयोः ।
सङ्क्रान्तिषु व्यतीपाते पित्रोर्मृतदिनेऽथवा ॥ ४६

स्नात्वा तिलाक्षतैर्भक्त्या तर्पयन्ति पितृन् द्विजाः ।
त्रिस्सप्तकुलमुद्धृत्य सर्वान् कामानवाप्य च ॥ ४७

देहान्ते परमं स्थानं यत्सुरैरपि दुर्लभम् ।
आप्नुयुस्तत्पदं सत्यं भिषगीशप्रसादतः ॥ ४८

भिषगीशस्थले ये वै सिद्धामृतसरस्तटे ।
तीर्थश्राद्धं प्रकुर्वन्ति तेषां मुक्तिर्द्विजोत्तमाः ॥ ४९

गयायां पिण्डदानेन पितृणां यादृशी भुवि ।
तृप्तिरासीत्तथा सिद्धामृततीर्थस्य तर्पणात् ॥ ५०

तीर्थैरत्यद्भुतैस्तत्र सिद्धानाममृतोपमैः ।
गङ्गा प्रत्यक्षभूताभूत् जटाय्वाख्ये सरोवरे ॥ ५१

तस्मात् सिद्धामृतमिति त्रिषु लोकेषु विश्रुतम् ।
गौरीब्रह्मकुजादीनां सर्वेषां स्नानमात्रतः ॥ ५२

यस्मिन् सिध्यन्ति काम्यानि सिद्धामृतमिति श्रुतम् ।
सिद्धास्सुराश्च गन्धर्वाः स्वर्गादादाय चामृतम् ॥ ५३

अभिषिच्य कलौ शम्भुमचिकित्साचिकित्सकम् ।
यस्माज्जटायुतीर्थं तु पूरयामासुरादरात् ॥ ५४

तस्मात् सिद्धामृतमिति प्रसिद्धं जगतीतले ।
तस्मिन् सिद्धामृते भानोर्वारे स्नात्वा नरोत्तमाः ॥ ५५

सदारोग्यास्तु ते शिष्टाः प्रसीदन्ति शिवास्पदम् ।
सोमवारे नराः स्नात्वा तस्मिन् सिद्धामृतोदके ॥ ५६

सर्वान् कामानवाप्याऽत्र शिवसायुज्यमाप्नुयुः ।
भौमवारे नरस्स्नात्वा तस्मिन् सिद्धामृतोदके ॥ ५७

अरुणोदयवेलायां सर्वाभीष्टप्रदायके ।
सर्वरोगविनिर्मुक्ताः क्षेत्रलाभमवाप्नुयुः ॥ ५८

किञ्चिदभ्युदिते सूर्ये तस्मिन् सिद्धामृते शुभे ।
भौमवारे नरस्स्नात्वा वैद्यनाथं महेश्वरम् ॥ ५९

ये सेवन्ते नरा भक्त्या दीर्घमायुरवाप्य च ।
आरोग्यं जयमासाद्य क्षुद्ररोगान् विधूय च ॥ ६०

भोगान् भुक्त्वा महाभागाः शिवसायुज्यमाप्नुयुः ।
भौमवारे नरस्स्नात्वा तस्मिन् सिद्धामृते जले ॥ ६१

हृदंबुजे वैद्यनाथं ध्यायन्तस्ते मुनीश्वराः ।
प्राधान्यं जगतां प्राप्य चिरं भोगानवाप्नुयुः ॥ ६२

किञ्चिदभ्युदिते सूर्ये भौमवारे नरोत्तमाः ।
ये स्नात्वा नियमेनैव सिद्धामृतमहोदके ॥ ६३

कृष्णश्रीगन्धकण्ठीं तां ध्यायन्ति हृदयाम्बुजे ।
कुबेरसन्निभास्ते तु प्रमोदन्ते शिवास्पदे ॥ ६४

भौमवारे नरः स्नात्वा तस्मिन् सिद्धामृते वरे ।
ये ध्यायन्ति गुहं भक्त्या सुदृढाः प्रमुदान्विताः ॥ ६५

क्षुद्ररोगविनिर्मुक्ता दीर्घमायुरवाप्नुयुः ।
भौमवारे समागत्य सिद्धामृततटे शुभे ॥ ६६

जलं स्पृष्ट्वा हृदि ध्यात्वा वैद्यनाथं मुदान्विताः ।
कुर्वन्ति प्रोक्षणं ये तु चुलुकोदकमात्रकम् ॥ ६७

तिलमात्रं माषमात्रं सिद्धामृतजलं शुभम् ।
पिबन्ति पुत्रं सद्रूपं शुभं विद्याबलैर्युतम् ॥ ६८

अवाप्य भोगान् भुक्त्वा ते शिवसायुज्यमाप्नुयुः ।
पञ्चाशत् कोटिविस्तीर्णे भूतले निवसन्ति ये ॥ ६९

द्वीपान्तरे वा ध्यायन्तो वैद्यनाथं च मानसे ।
स्नान्ति गङ्गाजलं स्नानजातं फलमवाप्नुयुः ॥ ७०

सौम्यवारे नरास्स्नात्वा तस्मिन् सिद्धामृते वरे ।
सर्वशास्त्रार्थतत्वज्ञाः दीर्घमायुरवाप्नुयुः ॥ ७१

गुरुवारे नरास्स्नात्वा तस्मिन् सिद्धामृतोदके ।
बुध्या बृहस्पतिसमाः त्रिकालज्ञानिनोऽपि ते ॥ ७२

इन्द्रस्य सदनं प्राप्य पौरोहित्यमवाप्नुयुः ।
भृगुवारे नरास्स्नात्वा तस्मिन् सिद्धामृते शुभे ॥ ७३

निधीन् सर्वानवाप्याशु शिवसायुज्यमाप्नुयुः ।
स्थिरवारे नरास्स्नात्वा तस्मिन् सिद्धामृते वरे ॥ ७४

शनिपीडाविनिर्मुक्ताः दीर्घमायुरवाप्नुयुः ।
माघमासे समागत्य वैद्यनाथस्थले नराः ॥ ७५

शुक्लप्रतिपदारभ्य स्वमापर्यन्तमास्तिकाः ।
सिद्धामृते पुष्करे ये स्नान्ति तेषामिदं फलम् ॥ ७६

आयुरारोग्यमैश्वर्यं पुत्रः शत्रुजयं त्वमी ।
सिध्यन्ति सत्यं देहान्ते मुक्तिरेव न संशयः ॥ ७७

माघमासे नरास्स्नात्वा तस्मिन् सिद्धामृते सकृत् ।
महारोगविनिर्मुक्ताः क्षुद्रपीडाविवर्जिताः ॥ ७८

पञ्चपातकनिर्मुक्ताः पुत्रैःपौत्रैस्समन्विताः ।
इह भुक्त्वाखिलान् भोगान् स्वमित्रैर्बन्धुभिस्सह ॥ ७९

त्रिसप्तकुलमुद्धृत्य शिवसायुज्यमाप्नुयुः ।
माघमासे सकृत् स्नात्वा गायत्रीं वेदमातरम् ॥ ८०

पञ्चाक्षरं जपं चान्यं मन्त्रं ब्राह्मणतर्पणम् ।
कृत्वा सिद्धामृतस्यास्य वैभवश्लोकमादरात ॥ ८१

यः शृणोति नरो भक्त्या करस्थास्तस्य सिद्धयः ।
ये दीपाराधनं कुर्युर्वैद्यनाथस्य भक्तितः ॥ ८२

अक्षिरोगाद्विनिर्मुक्ताः सर्वान् कामानवाप्नुयुः ।
प्रदक्षिणनमस्कारं श्रीरुद्रपठनं तथा ॥ ८३

बिल्वैरभ्यर्चनं चैव दानं ब्राह्मणभोजनम् ।
ये कारयन्ति कुर्वन्ति ते क्षुद्रादिविवर्जिताः ॥ ८४

सर्वव्याधिविनिर्मुक्तास्सर्वान् कामानवाप्य च ।
देहान्ते शिवसायुज्यं लभेयुर्नात्र संशयः ॥ ८५

औषध्यः फलपाकान्ता माघमासे फलन्ति ताः ।
द्विजानां ये प्रयच्छन्ति तत्रत्यानां महात्मनाम् ॥ ८६

क्षुद्ररोगादिनिर्मुक्ताः पुत्रैः पौत्रैस्समन्विताः ।
इह भुक्त्वाऽखिलान् भोगान् ते शैवं पदमाप्नुयुः ॥ ८७

पुण्ये सिद्धामृते स्नात्वा माघे ये भक्तिपूर्वकम् ।
गुलमिश्रं तिलं पुण्यं तण्डुलं कदलीफलम् ॥ ८८

बदरीफलमन्यद्वा धात्रीफलमनुत्तमम् ।
दानं कुर्वन्ति मुक्तास्स्युः ते वै संसारबन्धनात् ॥ ८९

विद्यां षष्टिं यशः पुत्रान् राज्यलक्ष्मीं समाप्नुयुः ।
वैद्यनाथस्थले माघे पुण्ये सिद्धामृते नराः ॥ ९०

स्नात्वा ब्राह्मणमेकं वा त्रिंशच्च धरणीसुरान् ।
भोजयेद्यदि मृष्टान्नैः भोगान् भुक्त्वा यथेच्छया ॥ ९१

सर्वव्याधिविनिर्मुक्ताः शिवसायुज्यमाप्नुयुः ।
ये शृण्वन्ति नरा भक्त्या तीर्थमाहात्म्यमुत्तमम् ॥
गङ्गास्नानफलं प्राप्य शिवसायुज्यमाप्नुयुः ॥ ९२

इति श्रीशैवपुराणे कोटिरुद्रसंहितायां उत्कृष्टशिवक्षेत्रप्रकरणे श्रीवैद्यनाथस्थानमाहात्म्ये सिद्धामृतवैभववर्णनं नाम दशमोऽध्यायः ॥

---

## ॥ एकादशोऽध्यायः ॥

ऋषयः –

सिद्धामृतस्य पुण्यस्य वैभवोक्तस्त्वया मुने ।
कुम्भयोनेऽस्य कुण्डस्य गृध्रनामाङ्कितस्य च ॥ १

वक्तुमर्हसि सर्वज्ञ वैभवं करुणानिधे ।
वसिष्ठाद्यैः कृतः प्रश्नः अगस्त्यो मुनिरब्रवीत् ॥ २

अगस्त्यः —

मुनिश्रेष्ठा महाभागाः भाग्यवन्तो धरातले ।
गृध्रकुण्डस्य दिव्यस्य सर्वाभीष्टप्रदायिनः ॥ ३

सर्वरोगहरस्यास्य सर्वपापहरस्य च ।
कृतो युष्माभिरनघः प्रश्नस्सर्वहिते रतः ॥ ४

अहं कृतार्थो मुनयः श‍ृणुध्वं प्रवदाम्यहम् ।
गृध्रकुण्डस्य माहात्म्यं सकृच्छृण्वन् पठन्नरः ॥ ५

सर्वरोगविनिर्मुक्तो दिव्यदेहो भवेद्दिजाः ।
मणिमन्त्रोषधाख्यं तत् दिव्य पञ्चाक्षरालयम् ॥ ६

रहस्यभूतं वरदं कुण्डं वेदमयं शुभम् ।
सप्तानामपि कोटीनां मन्त्राणामास्पदं द्विजाः ॥ ७

मणिमन्त्रौषधाख्यं तत् दिव्यं कुण्डधरातले ।
निर्मितं वैद्यनाथेन गृध्रकुण्डाभिधं भुवि ॥ ८

इत्युक्तास्तेन मुनिना कुम्भजेन मुनीश्वराः ।
प्रत्यूचुर्वारुणं प्रीत्या कुम्भयोनिं दयानिधिम् ॥ ९

ऋषयः –

अगस्त्य करुणा सिन्धो वैद्यनाथस्थले कथम् ।
निर्मितं वैद्यनाथेन केन कारणतः कदा ॥ १०

मणिमन्त्रौषधाख्यं तत् दिव्यं नाम भवेत्कथम् ।
विस्तराच्छ्रोतुमिच्छामो गृध्रकुण्डस्य वैभवम् ॥ ११

सर्वज्ञो हि भवान् लोके तत्सम्यग्वक्तुमर्हसि ।
इति तेषां वचः श्रुत्वा मुनीनां कुम्भजो मुनिः ॥ १२

मुनीन् समब्रवीदेवं लोकानां हितकाम्यया ।

अगस्त्यः –

गृध्रकुण्डस्य चोत्पत्ति मणिमन्त्रौषधाभिधम् ॥ १३

कुण्डदिव्यं च योर्नाम्नोरेतयोरादिकारणम् ।
वक्ष्यामि श्रूयते नृणां सौभाग्यारोग्यदं द्विजाः ॥ १४

पुरा दैत्यगुरुर्मन्त्रान् क्षुद्रान् मायाबलान् कविः ।
आदिदेवासुराणां यान् पुरश्चरणलंपटान् ॥ १५

मन्त्रान् लब्ध्वा गुरोर्दैत्याः सिद्धिं प्राप्य प्रसादतः ।
बलोद्धतास्समाहूय युयुधुः विबुधैस्सह ॥ १६

वर्षाणामयुतं भीममसुराणां दिवौकसाम् ।
युद्धं समभवद्घोरं क्षुब्धं समभवत्तदा ॥ १७

देवाः पाशुपतादीनि शस्त्राणि समराङ्गणे ।
चोदयामासुरुपरि दैत्यानाममरैर्हताः ॥ १८

दैत्या निर्जरशस्त्रैस्तु भिन्नदेहास्सुकोपिताः ।
आग्नेयादीनि चास्त्राणि सुराणामुपरि द्विजाः ॥ १९

क्षुद्रमन्त्रैः सुसंयोज्य चोदयामासुरञ्जसा ।
आग्नेयादिभिरस्त्रैस्तैः क्षुद्रमन्त्रयुतैस्सुराः ॥ २०

सञ्छिन्नाः सन्धिदेहास्ते हतशेषाश्च रोगिणः ।
क्षुद्रप्रेरणया भ्रान्ताः भ्रष्टराज्याः पराजिताः ॥ २१

व्याधिभिर्बाध्यमानाश्च चिकित्सारहितास्सुराः ।
सञ्चरन्तस्तत्र तत्र तदोपद्रवशान्तये ॥ २२

कुत्रापि शान्तिकर्तारं तस्य रोगस्य भूतले ।
अदृष्ट्वा चिन्तयायुक्ताः स्वशरीरवचोऽमृतम् ॥ २३

पीत्वा श्रोत्रपुटाभ्यां तु तदाज्ञावशवर्तिनः ।
दीन दिष्ट्या परं प्राप्ताः वैद्यनाथस्थलं महत् ॥ २४

विस्मितास्सस्नुरमराः गोक्षिराख्ये सरोवरे ।
ततो देवालयं प्राप्य पूजां कृत्वा यथाविधि ॥ २५

शरण्यं वैद्यनाथं तं प्रापुर्नेमुः पदाम्बुजम् ।
अस्तुवन् परमेशानं वैद्यनाथं दयानिधिम् ॥ २६

देवाः –

स्वामिन् सर्वजगन्नाथ सर्वरोगचिकित्सक ।
क्षुद्ररोगभयार्तान्नः त्राहि त्राहि महाप्रभो ॥ २७

अचिकित्साचिकित्साय चाद्यन्तरहिताय च ।
सर्वलोकैकवन्द्याय वैद्यनाथाय ते नमः ॥ २८

अप्रमेयाय महते सुप्रसन्नमुखाय च ।
अभीष्टदायिने तुभ्यं वैद्यनाथाय ते नमः ॥ २९

मृत्युञ्जयाय सर्वाय मृडानी वामभागिने ।
वेदवेद्याय रुद्राय वैद्यनाथाय ते नमः ॥ ३०

श्रीरामभद्रवन्द्याय जगतां हितकारिणे ।
सोमार्धधारिणे तुभ्यं वैद्यनाथाय ते नमः ॥ ३१

नीलकण्ठाय सौमित्रिपूजिताय मृडाय च ।
चन्द्रवह्न्यर्कनेत्राय वैद्यनाथाय ते नमः ॥ ३२

शिखिवाहनवन्द्याय सृष्टिस्थित्यन्तकारिणे ।
मणिमन्त्रौषधेशाय वैद्यनाथाय ते नमः ॥ ३३

गृध्रराजाभिवन्द्याय दिव्यगङ्गाधराय च ।
जगन्मयाय सर्वाय वैद्यनाथाय ते नमः ॥ ३४

कुजवेदविधीन्द्राद्यैः पूजिताय चिदात्मने ।
आदित्यचन्द्रवन्द्याय वैद्यनाथाय ते नमः ॥ ३५

स्तोत्रेणानेन सन्तुष्टो वैद्यनाथो महेश्वरः ।
तदाब्रवीत् सुरान् सर्वान् लोकानां हितकाम्यया ॥ ३६

वरं वृणुत भद्रं वो ददाम्यहमरिन्दमाः ।
इत्युक्ता वैद्यनाथेन सर्वदेवा मुदान्विताः ॥ ३७

आदिवैद्येश्वर वक्त्रेवं कारुणिकोत्तमम् ।

देवाः —

वैद्यनाथ महादेव वामदेव नमो नमः ॥ ३८

भक्तवत्सल देवेश प्रपञ्चपरिरक्षण ।
असुरैश्छिन्नहृदयच्छिन्नपाणितला वयम् ॥ ३९

हतशेषाः क्षुद्रसङ्घश्वेतकुष्ठादि पीडिताः ।
अपस्मारक्षयाद्यैश्च व्याधिराजमुखैर्हताः ॥ ४०

शीततापज्वराद्यैश्च बाध्यमानाऽनिशं वयम् ।
त्वत्पदाम्भोजयुगलं प्राप्ताश्शरणमद्य भोः ॥ ४१

रक्ष रक्ष महेशान शरणागतरक्षक ।
दृढगात्रान् कुरु क्षिप्तं अस्मान् त्वत्पादसेविनः ॥ ४२

जितासुरान् जयैर्युक्तान् पुनः प्राप्तपदानपि ।
एवमुक्तस्सुरैः शम्भुर्भक्तानामिष्टदायकः ॥ ४३

भेषजं कर्तुमिच्छावान् जगतां हितकाम्यया ।
सर्वसञ्जीवनं पीठं चतुरश्रं सकुण्डकम् ॥ ४४

चतुर्णवसहस्राणां व्याधीनां नाशकारकम् ।
अणिमादिप्रदं पुण्यं दर्शनादघनाशनम् ॥ ४५

दिव्यं तेजःप्रदं वामभागे संस्थापितं मया ।
यन्त्ररेखासमायुक्तं बहुशक्ति शुभप्रदम् ॥ ४६

परमाणुपरामर्शाद्द्रोणः कुण्डस्य तस्य वै ।
क्षुद्रसङ्घप्रशमनं सर्वपापहरं शिवम् ॥ ४७

मणिमन्त्रौषधमयं दिव्यं रोगविनाशकम् ।
ब्रह्मराक्षसमुख्यानां विद्रावण विचक्षणम् ॥ ४८

कुण्डस्य परितश्चास्य सर्वदा परिरक्षिणः ।
सप्तकोटिमहामन्त्राः कल्पिताः शक्तिसंयुताः ॥ ४९

दिक्षु चाष्टसु चेशान्यां वेदाश्चोपनिषण्मुखाः ।
प्रथमावरणे पुण्ये कल्पिताः पूर्वमेव हि ॥ ५०

तस्मात् कारणतो देवाः मदनुज्ञावशादलम् ।
श्रूयताममरा यूयं अस्मिन् गोक्षीरपुष्करे ॥ ५१

स्नात्वा प्रदक्षिणं कृत्वा नत्वा विघ्नेश्वरं पुरा ।
कृष्णश्रीगन्धकण्ठीं तां स्कन्दमावरणेश्वरान् ॥ ५२

मां वैद्यनाथं संसेव्य कृतमालासुमैस्तथा ।
समभ्यर्च्य परं देवा कृत्वा भक्तिपुरस्सरम् ॥ ५३

मणिमन्त्रौषधाख्येऽत्र कुण्डे चादाय मृत्तिकाम् ।
अभिषेकजलेनैव पञ्चगव्यादिभिः शुभैः ॥ ५४

गन्धोदकेन शुचिना सिद्धामृतजलेन च ।
प्रोक्षयित्वा स्वदेहेषु कुरुताद्य विलेपनम् ॥ ५५

तन्मृल्लेपनमात्रेण मत्प्रसादात् भवद्व्यथा ।
क्षुद्ररोगाः क्षयाद्याश्च नश्यन्त्वसुरचोदिताः ॥ ५६

जरामरणनिर्मुक्ताः दिव्यान्यङ्गान्यवाप्स्यथ ।
नित्यत्वं यौवनं चैव स्वसुरेभ्यो जयं तथा ॥ ५७

सौन्दर्यः स्वस्यराज्यं च प्राप्नुथान्यान्मनोरथान् ।
इत्यनुग्राह्य विबुधान् भिषगीशे वरप्रदे ॥ ५८

विरते विबुधास्तत्र गोक्षीर तदनुज्ञया ।
स्नात्वा गणपति नत्वा बालिकां स्कन्दमेव च ॥ ५९

अन्यानावरणीभूतान् देवान्नत्वा क्रमान्मुदा ।
प्रदक्षिणत्रयं कृत्वा कृतमालासुमैरपि ॥ ६०

कृष्णश्रीगन्धकण्ठीं तामादिवैद्येश्वरं सुमैः ।
समभ्यर्च्य नमस्कृत्य भक्त्या साञ्जलिबन्धनः ॥ ६१

मणिमन्त्रौषधाख्यस्य कुण्डस्य समुपागताः ।
समीपे मृदमादाय चाभिषेकजलैरपि ॥ ६२

अन्यैस्तीर्थैः पञ्चगव्यैस्तथा गन्धोदकैरपि ।
भक्तियुक्तास्सुरास्सर्वे मर्दयन्तोऽथ मृत्तिकाम् ॥ ६३

मौनिनो लेपयित्वा ते सर्वाङ्गेषु तदो द्विजाः ।
भक्षयित्वा तदा सद्यो दिव्यदेहा बभूविरे ॥ ६४

नेशुस्सुराणां गात्रेभ्यो क्षुद्ररोगादयस्तदा ।
विस्मयं परमं जग्मुस्सर्वे देवा मुदान्विताः ॥ ६५

नित्यत्वं यौवनं चैव सौन्दर्यं च पराक्रमम् ।
शौर्यं वीर्यं च संप्राप्य जरामरणवर्जिताः ॥ ६६

वैद्यनाथं महादेवं सम्यक् संपूज्य भक्तितः ।
अनुज्ञाप्य महेशानं स्वां पुरीं प्राप्य खेचराः ॥ ६७

युद्धं कृत्वा महाघोरं असुरैस्सह दानवैः ।
संहृत्य दैत्यानस्त्रैश्च जयं प्राप्य मुदान्विताः ॥ ६८

भजन्ते भिषगीशस्य प्रसादादतुलां श्रियम् ।

अगस्त्यः —

वैभवाद्वैद्यनाथस्य मणिमन्त्रौषधस्य च ॥ ६९

धूल्युद्धूलनमात्रेण सुरा रोगविवर्जिताः ।
दिव्यदेहा भवन्त्यस्मात् दिव्यकुण्डमिति श्रुतम् ॥ ७०

रक्षार्थं देवतानां च जगतां रोगशान्तये ।
सिद्ध्यर्थमणिमादीनां पीडं स्थापितवान्यतः ॥ ७१

यन्त्ररेखासमायुक्तं गृध्रराजपुरे शिवः ।
भेषजं कृतवान् शम्भुः वैद्यनाथोऽभवत्ततः ॥ ७२

मणिमन्त्रौषधान्येन सम्यक् स्थापितवान्यतः ।
मणिमन्त्रौषधाख्यं तत् प्रसिद्धं भुवि केवलम् ॥ ७३

दर्शनात् पापसङ्घातनाशकं जगतां हितम् ।
मणिमन्त्रौषधाख्य(स्य) कुण्डस्यालेपनान्मृदः ॥ ७४

चिकित्सारहिता देवा रोगेभ्यो मोचिता यतः ।
आदिवैद्येश्वरस्तस्मादचिकित्साचिकित्सकः ॥ ७५

भिषगीशोऽभवल्लोके सर्वाभीष्टप्रदायकः ।
मणिमन्त्रौषधाख्यं तत् कुण्डं वैद्येश्वरस्थले ॥ ७६

कृते हेममयं दृष्टं त्रेतायां रजतात्मकम् ।
द्वापरे ताम्ररूपं तत् कले मृद्रूपमद्भुतम् ॥ ७७

मणिमन्त्रौषधं कुण्डमलङ्कुर्वन्ति भक्तितः ।
तेषामारोग्यमायुश्च रूपं भाग्यं भवेद्ध्रुवम् ॥ ७८

संपातिश्च जटायुश्च परस्परजिगीषया ।
उच्चेलतुर्नभोमार्गे त्वहं पूर्विकया पुनः ॥ ७९

तावुभौ मण्डलं भानोर्गं वा तस्यांशुमण्डलैः ।
प्लुष्टपक्षौ विसंज्ञौ च पेततुर्धरणीतले ॥ ८०

संपातिस्तु तयोर्मध्ये विन्ध्यपर्वतमाप्तवान् ।
जटायुर्वैद्यनाथाख्ये पुण्यक्षेत्रेऽतिभासुरे ॥ ८१

मणिमन्त्रौषधाख्ये तु कुण्डे सर्वार्थसिद्धिदे ।
पतन् तस्य च माहात्म्यं वैभवाद्विहगाधिपः ॥ ८२

सपक्षस्सबलो भूत्वा लब्धसंज्ञः क्रमेण सः ।
चक्षुरुन्मील्य तेजस्वी दृष्ट्वा लिङ्गं तदाद्भुतम् ॥ ८३

स्नात्वा गोक्षीरतीर्थेऽथ कल्पकाख्य गणाधिपम् ।
कृष्णश्रीगन्धकण्ठीं च बालिकां स्कन्दमीश्वरम् ॥ ८४

वैद्यनाथं सुसम्पूज्य प्रदक्षिणमथाकरोत् ।
पतित्वा दण्डवद्भूमौ स्तोत्रवृन्दैरतोषयत् ॥ ८५

गृध्रेशः —

वैद्यनाथ महादेव नमस्ते भक्तवत्सल ।
विधिविष्णुमुनीन्द्राद्यैः अर्च्यमानपदांबुज ॥ ८६

गङ्गाधर जगन्मूर्ते चन्द्रवह्न्यर्कलोचन ।
पिनाकपाणे विश्वेश भिषगीश नमोऽस्तु ते ॥ ८७

अप्रमेय जगन्नाथ नीलकण्ठ महेश्वर ।
वेदवेद्य कृपाधार जगन्मूर्ते शुभप्रदम् ॥ ८८

अनादिवैद्य सर्वज्ञ त्वचिकित्साचिकित्सक ।
मदनान्तक गौरीश भिषगीश नमोऽस्तु ते ॥ ८९

स्तोत्रेणानेन सन्तुष्टो वैद्यनाथो महेश्वरः ।
गृध्रेशार्चनया प्रीतः प्रादुर्भूतो महेश्वरः ॥ ९०

वरं वृणु च भद्रं ते प्रीतोऽस्मि तव पूजनात् ।
स्तोत्रेण चाहं दास्यामि जटायोः वाञ्छितं शुभम् ॥ ९१

इत्युक्तो वैद्यनाथेन वरं वव्रे महेश्वरम् ।

जटायुः –

वैद्यनाथ महादेव मणिमन्त्रौषधेश्वर ॥ ९२

नमस्ते देवदेवेश भक्तवत्सल ते नमः ।
त्वयि भक्ति दृढं देहि मणिमन्त्रौषधं भुवि ॥ ९३

कुण्डं मन्नाम ते देव जटाय्वाख्यं भवेज्ज्वलत् ।
किं च देव स्थलमिदं गृध्रेशनगरं भवेत् ॥ ९४

मत्कुण्डस्य वरस्यास्य मृत्तिकां धारयन्ति ये ।
ते क्षुद्ररोगनिर्मुक्ता महारोग विवर्जिताः ॥ ९५

आयुरारोग्यमैश्वर्य मणिमादि जयं शुभम् ।
इह लोकेऽखिलान् भोगान् पुत्रदारादिभिस्सह ॥ ९६

अन्यैस्सुदुर्लभान् भुक्त्वा त्वत्सायुज्यं लभन्तु ते ।
एवं सम्प्रार्थितस्तेन गृध्रराजेन शङ्करः ॥ ९७

गृध्रेशस्य तथा दत्वा प्रार्थितानि वराण्यपि ।
तिरोधत्ते महादेवो वैद्यनाथो महेश्वरः ॥ ९८

गृध्रराजोऽपि सम्प्राप्य भिषगीशाद्वरं प्रियम् ।
अन्ते शिवपदं प्राप वैद्यनाथप्रसादतः ॥ ९९

एवं परःशता लीला भिषगीशस्य चाद्भुताः ।
हिरण्यवर्मा भूपालो गृध्रकुण्डस्य वैभवात् ॥ १००

मृत्तिकालेपनेनैव महारोगविवर्जितः ।
स्वर्णाकारशरीरोऽभूद्वैद्यनाथस्य वैभवात् ॥ १०१

जटायुकुण्डमाहात्म्यं ये शृण्वन्ति पठन्ति च ।
आयुरारोग्यमैश्वर्यं सर्वां सिद्धिमवाप्नुयुः ॥ १०२

इति श्रीशैवपुराणे कोटिरुद्रसंहितायां उत्कृष्टशिवक्षेत्रप्रकरणे श्रीवैद्यनाथस्थानमाहात्म्ये जटायुकुण्डमहिमानुवर्णनं नाम एकादशोऽध्यायः ॥

## ॥ द्वादशोऽध्यायः ॥

अगस्त्यः —

भूयो वक्ष्यामि माहात्म्यं वैद्यनाथस्य शूलिनः ।
शृण्वतां पठतां पुंसामायुरारोग्यदायकम् ॥ १

वैद्यनाथस्य पूर्वस्यां दिशि मन्नामतीर्थकम् ।
पुण्यं चकास्ति पापघ्नं तत्तीर्थस्नानमात्रतः ॥ २

सिध्येत् कल्याणमाग्नेय्यां ब्रह्मकुण्डमिति श्रुतम् ।
तत्र स्नात्वा महापुण्ये यद्द्यादणुमात्रकम् ॥ ३

तत्सर्वं कोटिगुणितं स्नानं दानं शिवार्चनम् ।
भिषगीशस्य नैरृत्यां कोदण्डतटिनी वरा ॥ ४

रामतीर्थमिति ख्यातं महापापहरं नृणाम् ।
वैद्यनाथस्य निकटे दक्षिणे परमाद्भुतम् ॥ ५

सिद्धामृतमिति ख्यातं कलौ सर्वार्थसिद्धिदम् ।
मृत्तिकां गृध्रकुण्डस्य वैद्यनाथाभिषेकजैः ॥ ६

गन्धोदकैः पञ्चगव्यैः मर्दयित्वा समाहिताः ।
ये लेपयेयुर्भक्त्या च श्वेतकुष्ठादि रोगतः ॥ ७

क्षुद्रदोषैर्विनिर्मुक्ता दिव्यदेहाश्च सुन्दराः ।
गन्धर्वरूपसदृशा महापापैर्विवर्जिताः ॥ ८

आरोग्यं बलमायुष्यं दीर्घमायुरवाप्नुयुः ।
देशान्तरस्थितो यो वा गृध्रऋक् स्कन्दनामके ॥ ९

मणिमन्त्रौषधात् कुण्डात् मृदमादाय भक्तितः ।
धृत्वा क्षुद्रादिरोगेभ्यो मुच्यते नात्र संशयः ॥ १०

गृध्रस्य गृध्रकुण्डस्य दर्शनं भाग्यसिद्धये ।
ज्वरादिभिः पीडितोऽपि तथा कुष्टादिभिर्वृतः ॥ ११

अपस्मारादिभिश्चैव भूतप्रेतादिभिस्तथा ।
अन्यैः क्षुद्रादिसङ्घैश्च संवृतः पीडितोऽपि वा ॥ १२

तेभ्यो विमुच्यते सद्यः गृध्रकुण्डस्य दर्शनात् ।
वैद्यनाथस्थले पुण्ये रुद्राक्षं धारयन्नरः ॥ १३

विभूतिं धारयन् धीमान् शिवपूजां करोति यः ।
सर्वोपद्रवसङ्घैर्मुच्यते नात्र संशयः ॥ १४

कृष्णश्रीगन्धकण्ठीं ये वैद्यनाथं प्रदक्षिणम् ।
ये कारयन्ति कुर्वन्ति तेषां वक्ष्ये फलं द्विजाः ॥ १५

अश्वमेधसहस्रस्य प्राप्नुवन्ति फलं ध्रुवम् ।
वैद्यनाथस्थले पुण्ये पुण्यारामं महेशितुः ॥ १६

यः करोति नरो भक्त्या चेहाभीष्टमवाप्य सः ।
कैलासभागे वासो वा देवेन्द्रत्वं भवेत् ध्रुवम् ॥ १७

भिषगीशपुरे यज्ञं ये कुर्वन्ति द्विजोत्तमाः ।
तेऽवाप्य सकलान् कामान् व्रजेयुः शाम्भवं पदम् ॥ १८

शिवरात्रव्रतादीनि वैद्यनाथस्थले द्विजाः ।
ये कुर्वन्ति नरा भक्त्या तेषां वक्ष्ये फलादिकम् ॥ १९

क्षुद्ररोगविनिर्मुक्तास्सर्वरोगविवर्जिताः ।
अवाप्य सकलान् कामान् व्रजेयुः शाङ्करं पदम् ॥ २०

वैद्यनाथस्थले पुण्ये यो ददाति द्विजातये ।
अन्नदानं रसोपेतं श्रद्धाभक्तियुतो नरः ॥ २१

तस्य पुण्यफलं वक्तुं न शक्नोमि मुनीश्वराः ।
वैद्यनाथस्थले पुण्ये कन्यादानं करोति यः ॥ २२

पुत्रपौत्रैः परिवृतः सार्वभौमो भवेद्ध्रुवम् ।
सस्ययुक्तां धरां तत्र वैद्यनाथस्थले नरः ॥ २३

यो ददाति दरिद्राय ब्राह्मणाय महात्मने ।
सप्तसागरपर्यन्तभूमिदानस्य यत्फलम् ॥ २४

तत्फलं प्राप्य तेजस्वी सोऽन्तेशिवपदं व्रजेत् ।
वैद्यनाथस्थले पुण्ये प्रपादानं करोति यः ॥ २५

अश्वमेधफलं प्राप्य शिवसायुज्यमाप्नुयात् ।
दुकूलं व्यजनं छत्रं शिबिकामम्बरं तथा ॥ २६

किरीटं भूषणं चैव वैद्यनाथस्थलेऽमले ।
श्रीगन्धकुसुमं दिव्यं मृगनाभिं च चन्दनम् ॥ २७

गोदानमश्वदानं वा गजदानं च कम्बलम् ।
मरीचिदशदानानि ये कुर्वन्ति द्विजातये ॥ २८

तेषां पुण्यफलं वक्तुं सहस्रवदनोऽक्षमः ।
श्वेतारण्ये च केदारे गजारण्ये वटालये ॥ २९

रामेशे कुम्भघोणे च गोकर्णे चित्सभास्थले ।
विरूपाक्षोऽर्जुनग्रामे त्यागराजपुरे वरे ॥ ३०

श्रीशैले चम्पकारण्ये वेदारण्यस्थले द्विजाः ।
महादानसहस्राणि यत्कृत्वा फलमाप्नुयात् ॥ ३१

तत्फलं वैद्यनाथेऽस्मिन् निष्कमात्रस्य दानतः ।
यः करोति नरो भक्त्या चाभिषेकं समाहितः ॥ ३२

आराधनशतं क्षीरैर्दधिभिश्च सहस्रकम् ।
घृताभिषेकैरयुतमपराधं सहेच्छिवः ॥ ३३

पञ्चामृतैः पञ्चगव्यैः ये कुर्वन्त्यभिषेचनम् ।
पञ्चपातकसन्धैस्ते मुच्यन्ते नात्र संशयः ॥ ३४

गन्धाभिषेकतस्सम्यक् भुक्त्वा भोगाननेकशः ।
ततः कैलासपदवीं प्राप्नुयुर्मुनिसत्तमाः ॥ ३५

ये बाध्यमानाः क्षुद्रैश्च श्वेतकुष्ठादिभिस्तथा ।
वैद्यनाथं समभ्यर्च्य बिल्वैस्साहस्रनामकैः ॥ ३६

मुक्तास्स्युः नात्र सन्देहः सत्यं सत्यं वदाम्यहम् ।
बहुनात्र किमुक्तेन भवन्तोऽपि महात्मनः ॥ ३७

पूजयध्वं महादेवं वैद्यनाथं महेश्वरम् ।
स्तुत्वा च विविधैस्तोत्रैः प्रार्थयित्वा मनोरथान् ॥ ३८

तत्रोषित्वा त्रिरात्रं च भोगान् भुञ्जत हे द्विजाः ।
इत्यगस्त्योदितान् धर्मान् सर्वपापप्रणाशनान् ॥ ३९

निशम्य शिरसा भक्त्या नेमुः कलशसम्भवम् ।
पूजयामास पाद्यार्घ्यैः गन्धपुष्पाक्षतादिभिः ॥ ४०

दिव्यपुष्पैः समभ्यर्च्य दिव्यगन्धानुलेपनैः ।
उत्थायोत्थाय धर्मिष्ठाः प्रणम्य च मुहुर्मुहु ॥ ४१

कृताञ्जलय उचुस्ते कृतार्थेनान्तरात्मना ।

**शौनकादि ऋषयः —**

वयमेव कृतार्थास्स्मः पाविताास्स्मो महामुने ॥ ४२

यच्छ्राविताास्स्मः सद्धर्मा अत्रागत्य स्वयं त्वया ।
अद्य नस्सफलं जन्म चाद्य नस्सफलं व्रतम् ॥ ४३

अद्य नः पितरस्तृप्ताः चाद्य नः सफलं कुलम् ।
पूजिताश्च महात्मानो अस्माभिः पूर्वजन्मनि ॥ ४४

सेवितानि च तीर्थानि दानानि सुकृतानि च ।
सत्सङ्गमो यथा भूयात् सत्कथाश्रवणं कृतम् ॥ ४५

केवलं भक्तियोगेन सुलभो भगवानच्छिन्नः ।
नेष्टापूर्तादिभिर्धर्मैः श्रुतोऽस्माभिर्महामुने ॥ ४६

अहो श्रीवैद्यनाथस्य माहात्म्यं श्रुतमद्य नः ।
सदा सत्सङ्गतिः कार्या विद्वद्भिः पापभीरुभिः ॥ ४७

सत्सङ्गेन भवाम्भोधिस्सुलभस्तर्तुमञ्जसा ।
परं पापयुता वापि कुर्युः सत्सङ्गतं बुधाः ॥ ४८

सत्सङ्गेन विना नृणां भवोऽब्धेः नौषधं महत् ।
नह्यामयानि तीर्थानि न देवा मृच्छिलामयाः ॥ ४९

ते पुनन्त्युरुकालेन दर्शनादेव साधवः ।
संसारिणो वयं ब्रह्मन् ब्रह्ममूर्तिः कुतो भवान् ॥ ५०

पुरा सञ्चितसद्धर्मात् त्वत्सङ्गतिरभूच्च नः ।
वयं कृतार्था हे ब्रह्मन् उत्तीर्णास्स्मो भवाम्बुधेः ॥ ५१

यदश्रौषाम माहात्म्यं वैद्यनाथस्य शूलिनः ।
अत्रैव सर्वधर्माश्च सर्वे यज्ञाश्च नैगमाः ॥ ५२

अत्रैव सर्वे तीर्थानि कथां श्रुत्वा हरस्य वै ।
इत्यश्रुलोचनी भूता महात्मानो मुनीश्वरम् ॥ ५३

पूजयित्वा यथान्यायमाशीर्भिरभिनन्दिताः ।
घटोद्भवं महात्मानं अनुज्ञाप्य मुनीश्वराः ॥ ५४

वैद्यनाथस्थलं प्राप्य पूजयित्वा महेश्वरम् ।
आराध्य सकलान् कामानवाप्यात्ममनोरथान् ॥ ५५

देहान्ते शिवसायुज्यं लेभिरे ते मुनीश्वराः ।

सूतः –

वैद्यनाथस्य माहात्म्यं श्लोकमात्रं पठन्ति ते ।
शृण्वन्ति तेऽखिलान् कामान् लभन्ते मनुजा ध्रुवम् ॥ ५६

इदं माहात्म्यमखिलं वेदसारं शुभावहम् ॥ ५७

वैद्यनाथस्य शृण्वन्ति सर्वान् कामानवाप्नुयुः ।

ऋषयः –

सूत सूत महाप्राज्ञ जीव जीव शतं समाः ॥ ५८

विचित्रं वैद्यनाथस्य माहात्म्यं श्रुतिगोपितम् ।
श्राविताःस्मः महाभाग भवाब्धेस्तारिता वयम् ॥ ५९

कृतार्थाश्च महान् लाभं तपो नः किमतःपरम् ॥ ६०

इति प्रसन्नाननीरजा मुदा
ते काश्यपाद्या मुनयो मुमुक्षवः ।
शम्भोश्चरित्रश्रवणोत्सुकोत्सुको
गन्धाक्षताभिः पुनरप्यपूजयन् ॥ ६१

इति श्रीशैवपुराणे कोटिरुद्रसंहितायां उत्कृष्टशिवक्षेत्रप्रकरणे
श्रीवैद्यनाथस्थानमाहात्म्ये द्वादशोऽध्यायः ॥

॥ वैद्यनाथस्थलपुराणं समाप्तम् ॥



